# चतुर्दशाखिल-भारतीय-प्राच्यविद्यामहासम्मेलने पण्डितपरिषत्सु समर्पितानां निबन्धानां सारांशाः





## पण्डित-परिषद्

सभापतिः—डाक्टरश्रीरमेशचन्द्रमजुमदार

स्वागताध्यक्षः—राजपण्डित श्रीबलदेवमिश्र

दर्शनविभागाध्यक्षः—पं० श्रीमार्कण्डेयमिश्र

व्याकरणविभागाध्यक्षः—पं० श्रीभार्गवशास्त्रीजोशी

शब्दखण्डविभागाध्यक्षः—पं० श्रीदीनबन्धुझा

वेदपूर्वमीमांसाविभागाध्यक्षः—म०म० पं० श्रीचिन्नस्वामीशास्त्री

आयुर्वेदविभागाध्यक्षः—पं० श्रीविश्वनाथझा

धर्मशास्त्रविभागाध्यक्षः—पं० श्रीत्रिलोकनाथमिश्र

ज्यौतिषविभागाध्यक्षः—पं० श्रीबलदेवमिश्र

काव्यसाहित्यविभागाध्यक्षः—म०म०पं० श्रीनारायणशास्त्री खिस्ते

आगमपुराणेतिहासाध्यक्षः—पं० श्रीसीतारामझा

दर्शनशास्त्रार्थाध्यक्षः—पं० श्रीटी०श्री०रामचन्द्र दीक्षित

व्याकरणशास्त्रार्थाध्यक्षः—पं० श्रीनिरसनमिश्र

शब्दखण्डशास्त्रार्थाध्यक्षः—पं० श्रीवेंकटेशदीक्षितार

ज्योतिषशास्त्रार्थाध्यक्षः—पं० श्रीदयानाथझा

पञ्जीशास्त्रार्थाध्यक्षः—पं० श्रीरघुनन्दनझा



मुद्रकः—चन्द्रकुमार शर्मा, बृजकौशल प्रेस, नया कठरा, इलाहाबाद

प्रकाशकः—स्थानीयमन्त्री, चतुर्दशाखिलभारतीय-प्राच्यविद्यामहासम्मेलनम्,
दरभंगा ( मिथिला )

# निबन्धानां सूची

## प्रथमखण्डः

### दर्शनविभागः

पृष्ठ संख्या



### व्यकरणविभागः

## शब्दखण्डविभागः



## वेदपूर्वमीमांसाविभागः

## आयुर्वेदविभागः



## द्वितीयखण्डः

## धर्मशास्त्रविभागः

पृष्ठ संख्या

## ज्यौतिषविभागः



## काव्य-साहित्य-विभागः

## आगमपुराणेतिहासविभागः

# दर्शनविभागः

## १—शब्दतत्त्वविमर्शः

प० श्रीभूपनारायणझा, संस्कृतकालेज, काशी-

तार्किक-वैशेषिक-सौगत-शिक्षाकार-जैन-सांख्य-मीमांसक-प्राच्य-ााब्दिकोत्प्रेक्षितं शब्दतत्त्वमुपपत्तिप्रमाणाभ्यां प्रतिक्षिप्य तान्त्रिक-द्धत्या शब्दतत्त्वस्य ब्रह्मपदे प्रतिष्ठापनमेवाव्यहितापेक्षितमित्र-ानुबन्धेऽस्मिन्निबन्धे निर्बन्धेन मया न्यबन्धि।

## २—आरम्भवादः

प० श्रीबदरीनाथशुक्ल, विश्वविद्यालय, काशी

यायवैशेषिकमतेन सृष्टिसंहारनिरूपणम्। परमाणुक्रिया-समर्थनम्। रमाणुसंयोगाक्षेपपरीहारः। परमाणूनां प्रामाणिकतावर्णनम्। रमाणुनित्यतानिरूपणम्। निरवयवस्याणोः परमाणुत्ववर्णनम्। सरेणौ सावयवत्त्वविश्रान्तेर्वर्जनम्। त्रुटिनित्यतानिराकरणम्। यणुकसमर्थनम् द्व्यणुकत्रसरेणुपरिमाणकारणनिर्णयः।

पाश्चात्यपरमाणुवादः। अवयवावयविभावसमर्थनम्। समवाय-म्बन्धसाधनम्। विवर्तवादखण्डनम्। परिणामवादनिराकरणम्।

## ३—अद्वैतदर्शनस्यातिप्राचीनता

प० श्रीरामस्वामिशास्त्री, बरोदा

अद्वैतदर्शनस्येतिहासमारचयन्तो विद्वांसः कतिपये एवं न्यन्ते यदिदं दर्शनं गौडपादाचार्योपज्ञमेव। नैश्चाचार्यैर्माण्डू-यकारिकायामद्वैतदर्शनमौपनिषदं सर्वद्वैतदृष्टिनिरसनपूर्वकं व्यव-ापितमिति।

अन्ये च विमर्शकवरेण्या मन्यन्ते यथाऽयं गौडपादाचार्यो-पे बौद्धानां दर्शनेषु विज्ञानवादशून्यवादादिषु कृतपरिश्रमः दशमेव बौद्धसिद्धान्तं उपनिषद्वचस्सु पश्यन् द्वैतदर्शनानि च स्परविरुद्धान्यप्युपनिषदर्थोपब्रह्मणपराणि निरस्याद्वैतदर्शन-

माध्यात्मिकतत्त्वदर्शनेतिहासे इदं प्रथमतया प्रकटयामासेति ब्रुवते च कारणानि बहूनि साधनायैतयोरर्थयोः। एतयोश्च शङ्कयोर्निराकरणायास्मिन् लेखे शङ्करगौडपादयोरपि प्राक्तनानामद्वैतदर्शनसिद्धान्तप्रतिपादनपराणां वैदिकागमिकजैनबौद्धवचसामेकीकरणं प्राधान्येन क्रियते। येन च गौडपादाचार्येभ्योऽपि प्राचीने काले व्यवस्थितरूपेणाद्वैतदर्शनसिद्धान्तप्रतिपादका ग्रन्थाः सह द्वैतवादैर्बहुरूपैरासन्नेव। परन्तु बलवता कालमहिम्ना शङ्करगौडपादयोरतिप्रशस्तेन वाग्विजृंभितेन वा लुप्तस्वरूपास्ते ग्रन्था नास्मद्दृष्टिपथमागता इति स्फुटं प्रतीयेत विमर्शकाश्च नास्थाने विचारानेवं रूपान्प्रवर्तयेयुरिति।

## ४–त्रितलावच्छेदकता

पंडितश्रीशशिनाथझा, रौंटी, दरभंगा

त्रितलत्वं नाम एकमवच्छेदकत्वमाधारीकृत्य भवति द्वितीयमवच्छेदकत्वं तदाश्रितं तृतीयमवच्छेदकत्वं तत्र वर्त्तमानं यच्चतुर्थमवच्छेदकत्वं तदवच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठं त्रितलं भवति तद्भावस्त्रितलत्वं, किञ्चिन्निष्ठावच्छेदकतानिरूपितप्रतियोगितानिरूपकप्रथमाभावविशिष्टघटितप्रतियोगिकद्वितीयाभावविशिष्टघटितप्रतियोगिकतृतीयाभावविशिष्टघटितप्रतियोगिकतुरीयाभावनिरूपितप्रतियोगितानिरूपितपरम्परावच्छेदकता प्रथमाभावप्रतियोगितानिरूपितावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वरूपा त्रितला भवति। परमेतादृशत्रितलावच्छेदकत्वोपवर्णनं न सूक्ष्ममतिधनानां प्रमोदविधायकं मन्दमतिनाप्येवमवधारयितुं शक्यत्वात् किन्तु नीलो घट इतिवाक्यजन्ये तादात्म्यसम्बन्धेन नीलप्रकारकघटविशेष्यकशाब्दबोधे विषयतास्वरूपा नीलत्वनिष्ठावच्छेदकता घटत्वनिष्ठावच्छेदकता चेत्येवमवच्छेदकताद्वयी प्रथमतः प्रतिभाति, न च तस्या एकमप्यवच्छेदकत्वमाश्रय इति एकतलापि सा न भवति। तत्र यदि त्रितलावच्छेदकत्वादिकं सयुक्तिकमुपपाद्यते तदा भवति नव्यानामभिनवा मन्दमन्दकन्दोदय इत्येतदर्थं निरुक्तशाब्दबोध एव त्रितलावच्छेदकताद्युपदर्शनायाश्रितो यत्नः, तत्र यद्यपि अनन्तराभासमानसमानाधिकरणैकज्ञाननिरूपितविषयत्वद्वयविषयता अवादीनामवे

मुररीकुर्वतो जगदीशस्य मते विषयत्वाभेदो विषयत्वघटोभयभेद-
विषयत्वभेदघटोभयाभावादिकमादायासम्भवातिप्रसङ्गादिवारणाय
विषयतात्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितविषयतात्व-
निष्ठावच्छेदकतानिरूपितप्रतियोगिताकभेदत्वनिष्ठावच्छेदकताभिन्ना-
वच्छेदकत्वानिरूपितनिरुक्तभेदत्वनिष्ठावच्छेदकतानिरूपितप्रतियोगि
ताकाभावरूपो विषयत्वान्तरस्य विशेषणविधया निविशति।
एवं तत्तद्विषयत्वान्तराभेदोऽप्युक्तस्वरूपो निविशति,
तथा च यावन्तस्तत्तदवच्छेदकतासंसर्गताप्रकारता-
विशेष्यतालक्षणविषयताभेदाविशेषणभावमापन्नास्तत्तदवच्छेदकता-
घटितमूर्त्तिकास्ते सर्वे निरुक्तशाब्दबोधाकारघटकतमश्नन्तो
भवन्ति शाब्दबोधाकारस्वरूपोल्लेखवचनविस्तारकारका अवच्छे-
कतास्तोमप्रवाहाश्रितसरस्वतीनद्यवगाहनलालसानामानन्दकन्दोल्ला-
सनाय, परन्तत्तद्विषयत्वाभेदविशिष्टा अपि विषयता न कस्याऽप्य-
वच्छेदका भवन्तीति न त्रितलावच्छेदकतादेरत्रोन्मेषः।
गदाधरभट्टाचार्यास्तु अनन्तराभासमानसमानाधिकरणैकज्ञान-
निरूपितविषयत्वद्वयादीनामवच्छेद्यावच्छेदकभावमुशन्ति, तद्ग्-
ग्रन्थरत्नमेव व्युत्पत्तिवादाख्यं शाब्दिकास्तार्किकाश्च स्वबुद्धि-
वैभवाविर्भावनार्थं शास्त्रार्थस्थानत्वेनाश्रयन्ति। ततः शाब्दबोधाका-
रोल्लासने तन्मतावलम्बनमुपादेयकक्षामश्नुते। तत्र नीलो घट
इति शाब्दबोधीया नीलत्वे नीले घटत्वे घटे नीलत्वादीनां संसर्गे च
स्वातन्त्रीयाः पारतन्त्रीयाश्च सन्ति बह्व्यो विषयताः तासाञ्च
दर्शिताभ्युपगमाश्रयणेन यथायथमवच्छेद्यावच्छेदकभावो भवति।
तथा सति विषयतापरम्पराऽवच्छेदिका भवतीति त्रितलावच्छेद-
कतादिसम्पत्तिर्यथा भवति यथा च तदुक्तिवैचित्र्यं प्रयोगवीथी-
मवलम्बते तदुपदर्शितमभिनवनिबन्धे। विषयित्वानामप्यवच्छेद्या-
वच्छेदकभावमाश्रित्य तत्रापि त्रितलावच्छेदकताद्युपदर्शनपुरस्सरं
निरुक्तशाब्दबोधाकाराविर्भावनं कृतमस्तीतिविषयबाहुल्याभावेऽपि
विषयता तद्गतावच्छेदकताबाहुल्यं विदुषामानन्दाय भविष्यतीति।

## ४—अभेदवादः

पं० श्रीराजनारायणझा, नरहन, दरभंगा

लेखे चास्मिन् संक्षेपेण वेदान्तस्वरूपं, मोक्षलक्षणम्, द्वैताद्वैत-
विशिष्टाद्वैतमतानामेकीकरणम्। पूर्वोत्तरमीमांसयोस्सामञ्जस्यम्।

शैववैष्णवशाक्तसौरगाणपत्यानां विरोधपरिहारपूर्वकदेवतैकाप्रदर्शनञ्च वर्णितमस्तीति ।

---

## ६—उपनिषत्सु वेदत्वसिद्धिः

प० श्रीरविनाथठाकुर, मधवापुर, दरभंगा

उपनिषत्सु वेदत्वसिद्धिस्तमप्रमाणत्वेन शाङ्करभाष्यघटकपंक्तेरुल्लेखः घटकत्वादिपदानामपि वेदघटकत्वस्थापनम् ।

गङ्गेशोपाध्यायनिर्मितचिन्तामणिसिद्धान्तलक्षणसामान्यनिरुक्तिप्रकरणस्थलक्षणप्रतिपादकवाक्यानां यथाश्रुतार्थव्याख्यानेन यथाश्रुतवाक्यानामेव समीचीनत्वव्यवस्थापनम् । तत्र च तादृशप्रतियोगितावच्छेदकावच्छिन्नत्वव्यापकभेदप्रतियोगित्वस्य साध्ये निवेशेनैव निर्वाहः । अनुमितिपदं प्रकृतपक्षकप्रकृतसाध्यकप्रकृतहेतुकानुमितिपरम् । तादृशत्वानुमितित्वावच्छिन्नकार्यतानिरूपितकारणत्वस्य निवेशः । द्वितीयलक्षणे अवच्छेदकत्वं स्वरूपसम्बन्धमेव । विशिष्टद्वयाघटितत्वस्य विशिष्टान्तराघटितत्वस्य च निवेशमन्तरैव निर्वाहः । तत्र मणिकारनिर्मितविशेषव्याप्तिप्रकरणघटकवाक्यानां प्रमाणतयोल्लेखः ।

## ७—माया

प० श्रीसुब्रह्मण्यशास्त्री, त्रिचुरी

माया नाम काचन लोके वेदे च व्यपदिश्यमाना सत्त्वासत्त्वाभ्य अनिर्वचनीया भगवदाश्रिता भगवतः न भिन्ना नाप्यभिन्ना निष्क्रियस्य असंगस्य कूटस्थचैतन्यस्य जगत्स्रष्टृत्वव्यवस्थापिका सांख्यादिभिः भाषान्तरेणांगीकृता तत्त्वज्ञाननिवर्त्या अजा अस्तीति अत्र यथामति निरूपिता ।

## ८—अभावविचारः

पं० श्रीकृष्णमाधवझा, भोलेश्वर, बम्बई

परिदृश्यमानेहेदानीं नास्तीति प्रतीतिरधिकरणमात्रविषयिण तदतिरिक्ता भावस्यासत्त्वात् । न च स्वस्मिन् स्वाधारता असत्त्वेन घटाभाववद्भूतलमित्यनुपपन्नम् । तत्स्वीकारे च घ

घटवानित्यापत्तिरिति वाच्यम् । विलक्षणायाः घटाभावत्वावच्छिन्नाधिकरणतायास्तत्र स्वीकारेऽपि स्वाधारताया अस्वीकारात् । न च कल्पनागौरवम् । त्वयाऽपि स्वीकृतत्वात् । अन्यथा समवायस्य लाघवादेकत्वे स्पर्शसमवायस्य वायौ सत्त्वेन रूपवान् वायुरित्यापत्तेः । न च समवायरूपसम्बन्धसत्त्वेऽपि रूपाभावान्नोक्तदोषः । सम्बन्धिसत्तायाः सम्बन्धसत्त्वाधीनत्वस्वीकारात् । तथा सति यद् येनेन्द्रियेण गृह्यते तदभावस्तेनैवेति नियमेनाभावस्याधिकरणस्वरूपत्वे हुताशने गन्धाभावस्य प्रत्यक्षानुपपत्तिः । हुताशनस्य घ्राणाग्राह्यत्वात् । अतोऽधिकरणेतरोऽभावोऽङ्गीकार्यः । स चाभावः सम्बन्धावच्छिन्नप्रतियोगिताको न वेति ।

अत्र नवीनाः, तद्वत्ताबुद्धित्वावच्छिन्नप्रतिबन्धकतावच्छेदकतावत्त्वस्यैव तदभावत्वेन संयोगेन घटाभाव इत्यादौ सम्बन्धाभावस्यातथात्वेन कथं तदभावत्वं सेत्स्यति । न चैवं तदभावव्याप्यवत्तानिश्चयस्यापि तद्वत्ताबुद्धिप्रतिबन्धकत्वेन तथात्वात् तदभावत्वापत्तिरिति वाच्यम् । तादृशावच्छेदकत्वे सति तदभावत्वेन व्यवह्रीयमाणस्यैव तथात्वात् । एतेन भूतलस्यापि प्रतिबन्धकतावच्छेदकतया तत्त्वापत्तिरिति निरस्तम् । न च सत्यन्तं विफलम् । विचित्रसम्बन्धावच्छिन्नाभावानामैक्यापत्तेः ।

अत्र प्राचीनाः संयोगेन घटवति भूतले समवायेन घटो नास्तीत्यनुपपन्नम् । तां प्रति तस्याप्रतिबन्धकत्वात् । मम तु भूतले घटप्रतियोगिकसमवायासत्त्वेन नोक्तदोषः । न च कथं घटे संयोगेन रूपं नास्तीतिप्रतीतिस्तत्र संयोगस्य सत्त्वादिति वाच्यम् । प्रतियोगिप्रतियोगिकत्वसम्बन्धतावच्छेदकोभयपर्याप्तावच्छेदकताकाभावस्यैव तथात्वात् । न चैवं घटो घटाभावप्रतियोगीति कथमुपपद्यते । स्वरूपसम्बन्धरूपप्रतियोगिताया घट एव स्वीकारात् । न च कल्पनागौरवम् । समनियताभावानामैक्यमते त्वयाऽपि घटप्रतियोगिकसंयोगाभावीयप्रतियोगित्वस्य संयोगेन घटाभावप्रतियोगिनि घटे स्वीकृतत्वात् ।

अत्र नवीनाः—भवत्वेवं तथापि प्रतीतिरेव पदार्थनियामिकाङ्गीकार्याऽन्यथाऽव्यवस्थापत्तेस्तथा च पश्यामि संयोगेन घटाभाववद्भूतलमिति प्रतीतिर्न तु घटप्रतियोगिकसंयोगाभाववद्भूतलमिति सम्बन्धावच्छिन्नप्रतियोगिताकोऽभावो न तु सम्बन्धाभावस्तथा च तद्वत्ताबुद्धिप्रतिबन्धकताविशिष्टप्रकारतावत्त्वमभावत्वमिति फलितम् । वै० स्वावच्छेदकधर्मितानिरूपितत्वस्वविशिष्टत्वाभ्याम् । [illegible] वै० स्वावच्छेदकत्व-स्वाधिकरणवृत्ति भेदप्रतियोगितावच्छेद-

कत्वाभाववत्त्वाभ्याम् । प्रतिबन्धकता च ग्राह्याभावाभागित्वावच्छिन्ना । ज्ञानवैशिष्ट्यानवच्छिन्नत्वाभावव्याप्यविषयकत्वावच्छिन्ना वा गृह्यते ।

## ९—जीवसाक्षिविचारः

श्रीनारायणशास्त्री वाडीकर, अहमदाबाद

जीवसाक्षिविचारः सोपपत्तिकः सुगमः स्पष्टरूपेण प्रतिपादितः । अन्तःकरणस्य तद्धर्माणां सुखादीनां पञ्चेन्द्रियेभ्यः बोधो न भवति । इन्द्रियेभ्यः परत्वात् अपञ्चीकृतभूतकार्यत्वाच्च. मनसो नेन्द्रियगोचरतासंभवः तत्प्रत्यक्षाय साक्षिस्वीकारः आवश्यकः। एकस्मिन्नेव चेतने विशेष्यभागे साक्षिसंज्ञा जीवसंज्ञा च यदा ह्यंतःकरणमुपाधिः तदा साक्षिसंज्ञा। यदा तु विशेषणमन्तःकरणं तदा जीवसंज्ञा च । अन्तःकरणवृत्तिद्वारा साक्षी सुखादीन् प्रकाशयति। वृत्तिं विना केवलसाक्षिगोचराः सुखादयो न भवन्ति। तथा च जीवसाक्षिणा सह ब्रह्मणोऽभेदः संभवति न वन्ध्यापुत्रसमः साक्षिविचारः ।

---

## १०—चिदचिद्विशिष्टब्रह्मविचारः

श्रीसनकनन्दनपाठक

वेदान्तवाक्यानां चिदचिद्विशिष्टब्रह्मातिरिक्तप्रधानजीवनिर्विशेषब्रह्मतात्पर्य्यकत्वाभावपूर्वकचिदचिद्विशिष्टब्रह्मतात्पर्य्यकत्वसमर्थनम् ।

तस्य चिदचिद्विशिष्टस्य ब्रह्मणः वेदान्तवाक्यद्वारा "जन्माद्य"-तिब्रह्मसूत्रेण जगदुत्पत्तिस्थितिलयकारणत्वरूपलक्षणेन विशेषणतयोपलक्षणतया च प्रतिपत्तिसमर्थनम् ।

## ११—अवच्छेदवादसमीक्षा

प० श्रीरुद्रधरझा, काशी

जगति अहंसुखीत्यादि प्रतीतिविषयं कश्चनास्मत्पदार्थम् । किन्तु तत्रात्मनि विपद्यमानानां समेषां सिद्धान्तिनो वाचस्पतिमिश्रस्य मतमवलम्ब्यावच्छेदवादः समीक्ष्यते ।

तत्र प्रथमं जीवेशब्रह्मविभागः प्रतिपादितः। ततः संक्षेपेण ब्रह्मणस्स्वरूपलक्षणन्तटस्थलक्षणञ्च सश्रुतिप्रमाणन्निरूपितम्। तत आत्मतत्त्वप्रतिपादकवाक्यमुट्टङ्कितम्। तत आत्मनो ज्ञानात्मकत्वेऽपि अहं जानामीति प्रतीतिरुपपादिता। ततोऽविद्यालक्षणं सपदकृत्यं प्रदर्शितम्। ततोऽविद्यायां प्रत्यक्षानुमानश्रुत्यादीनि प्रमाणानि लिखितानि। ततोऽविद्याया ब्रह्मविषयत्वजीवाश्रितत्वनानात्वानि वार्त्तिककारादिग्रन्थसंगतिसम्पादकानि विवेचितानि। ततोऽविद्यायाः साक्षिभास्यत्वानुपपत्त्या ब्रह्माश्रितत्वं खण्डितम्। ततोऽविद्याविषयत्वस्यैवोपादानत्वादिनियामकत्वमभ्युपगम्य जीवस्याविद्याश्रयत्वेन जायमाना प्रपञ्चोपादानत्वाद्यापत्तिः निराकृता। ततो विवरणकारादिमतेन जीवेशब्रह्मविभागः प्रतिबिम्बवादश्च समुपपादितः। ततः चाक्षुषत्वस्यैव प्रतिबिम्बप्रयोजकत्वमभ्युपगम्य प्रतिबिम्बपक्षो दूषितः। ततोऽवच्छेदपक्षे कृतहान्यादिदोषः, जीवब्रह्माभेदबोधकश्रुत्यादीनां निरालम्बनतापत्तिः, बन्धमोक्षयोर्वैयधिकरण्यापत्तिः, मोक्षार्थं प्रवृत्त्यनुपपत्तिश्च प्रतिपादिता। ततो बिम्बस्यैव प्रतिबिम्बत्वमितिपक्षो निराकृतः। ततोऽवच्छेदपक्षे श्रुत्यादिसामञ्जस्यं प्रदर्शितम्। ततः प्रतिबिम्बपक्षे श्रुतिभाष्यादिविरोधः समुपपादितः। ततोऽवच्छेदवादे समेषां विशिष्टाचार्याणां सम्मतिः प्रदर्शिता। ततोऽवच्छेदवाद एव विजयतेतरामिति सर्वथा निरूपितम्। ततः श्रुतिरपि साक्षादवच्छेदवादमेव कथयतीति समुपपादितम्।

## १२—नव्यनैयायिकानां अनुशासनपक्षपातः

श्री वि० सुब्रह्मण्यशास्त्री

(क) नव्यनैयायिकाः प्रामाणिकवाक्यजन्यशाब्दबोधस्याबाधितार्थविषयकत्वोपपादने, असिद्धप्रमाणभावानां वाक्यानां भ्रमजनकत्वनिर्वाहे च दत्तदृष्टयः, अनुशासनमविगणय्य योग्यं तं तमर्थं विभक्त्यर्थतया निरूपयन्ति। तथाहि तण्डुलानोदनं पचतीत्यादौ प्रकृतिकर्मोत्तरद्वितीयायाः नाशकत्वार्थकतां, विकृतिकर्मोत्तरद्वितीयाया उत्पादकत्वार्थकतां, घटत्वेन वह्निर्नास्ति इत्यादौ तृतीयायाः अवच्छिन्नप्रतियोगित्वार्थकतां, सप्तम्याः बाधकत्वनिरूपितात्यन्ताभेदाद्यर्थकतां च वर्णयन्ति।

(ख) एवं स्तोकं पचतीत्यादौ क्रियाविशेषणानां कर्मत्वं न्यायेन वैया-

करणैः उपपाद्यते । क्रियाविशेषणानां कर्मत्वमिति किञ्चिदनुशासनं तत्र कल्पयन्ति ।

(ग) एवं व्युत्पत्तिवादे तादर्थ्यार्थे सूत्रान्तरेणेत्यादि लेखनात् तादर्थ्ये चतुर्थी वाच्या इति ।वार्तिकं सूत्रं मन्यन्ते । तस्माद्वाक्यार्थनिरूपणे विचक्षणा अपि अनुशासनेन न संगच्छन्ते इति केचन मन्वते ।

(क) वयन्तु पश्यामः नव्यनैयायिकाः सर्वथा अनुशासनपक्षपातिनः अनुशासनमतिलङ्घ्य न किमपि प्रतिपादयन्ति इति । तथाहि फलपर्यवसितस्य कर्मत्वस्य द्वितीयावाच्यत्वात्, द्व्यर्थः पचिरिति भाष्यपर्यालोचनया पचतीत्यस्य नाशः उत्पत्तिश्चेतिफलद्वयावच्छिन्नव्यापारबोधकत्वात् नाशस्य उत्पत्तेश्च कर्मणि विहितद्वितीयायाः अर्थत्वेन वर्णनं संगतमेव भवति । अवच्छिन्नप्रतियोगिताकत्वादीनां वैशिष्ट्यरूपत्वात् तस्मिन्नर्थे 'इत्थंभूतलक्षणे' इतिसूत्रविहिततृतीया भवति । वाचकत्वनिरूपितत्वादीनां आधेयत्वे पर्यवसानात् तेषां सप्तमीवाच्यत्वमुपपद्यते । दाने कर्णसमः इत्यत्र अभेदे सप्तमी तु 'सप्तम्यधिकरणे च' इतिसूत्रस्थचकारेण भवति । गुणकर्मान्यत्वे सति सत्त्वादित्यादौ च यस्य च भावेन भावलक्षणमित्यनुशासनसिद्धा सप्तमी ।

(ख) स्तोकं पचतीत्यादौ वैयाकरणोक्तरीत्या कर्मत्वमुपपादयितुं न शक्यते । तादात्म्यस्य फलतावच्छेदकसम्बन्धत्वाभावेन तेन संबन्धेन फलाश्रयस्य फलस्य कर्मत्वासंभवात् । तथात्वेपि स्तोकं पच्यते स्तोकस्य पक्वा इत्यादि प्रयोगापत्तेः । स्तोकं तिष्ठतीत्यादौ धात्वर्थफलस्यैवाभावात् भावे वा व्यापारव्यधिकरणत्वाभावेन तादृशफलाश्रयस्य कर्मत्वासंभवात् । धात्वर्थव्यापारे मन्दाद्यभेदविवक्षायामपि मन्दं गच्छति जनितविभागं गच्छति इत्यादि प्रयोगात् तत्र कर्मत्वोपपादनासंभवात् । व्यापारविशेषणत्वे नपुंसकप्रथमान्तत्वस्वीकारे सुखहेतुं पश्यति इत्यादावनिर्वाहाच्च ।

ततोन्यत्रापि दृश्यते इति वार्तिकांशेन तत्र द्वितीयामात्रमित्यपि न संगच्छते । कतिपयाव्ययोगे द्वितीयाविधानानन्तरं प्रवृत्तस्य तस्य तद्भिन्नाव्ययोगे एव द्वितीयाविधायकत्वौचित्यात् ।

एतेन वार्तिकांशेन कल्पितं क्रियाविशेषणानां कर्मत्वमित्यनुशासनमिति परास्तं वेदितव्यम् ।

परन्तु तत्पूत्यनुपूर्वमपि लोमकूलम् इति क्रियाविशेषणकर्म द्वितीयान्तात् ठग्विधानं क्रियाविशेषणानां कर्मत्वं नपुंसकलिङ्गता च इति परिभाषां ज्ञापयति इति सीरदेवेनोक्तत्वात्। सैव परिभाषा अनुशासनपदेन विवक्षिता भट्टाचार्यैः। ज्ञापकसिद्धं न सर्वत्र इति परिभाषया स्तोकस्य पक्ता इति प्रयोगापत्तिः। विभक्त्यर्थनिर्णयोऽप्यस्यार्थस्योपोद्बलको दृश्यते।

(ग) तादर्थ्ये (२-४-२७) इतिकातन्त्रसूत्रमेव भट्टाचार्यैः विवक्षितम्। द्वितीयातृतीयाविचारादिषु अन्यव्याकरणस्मृतीनामुद्धारस्य दर्शनात्।

तस्मात् नव्यनैयायिकाः भट्टाचार्याः सर्वथा अनुशासने बद्धपक्षपाताः वाक्यार्थान्विचार्य निर्धारयन्ति।

## १३—तमसोभावत्वसिद्धिः

प. श्रीवाचस्पतिमिश्र, माधवकिशोरसंस्कृतविद्यालय

तमोभावरूपमभावरूपं वेति विप्रतिपत्तौ तेजोभावरूपमेव तत् तस्य भावरूपत्वासम्भवात्। भावरूपत्वे द्रव्यादिषडन्यतमं तदन्यद्वा स्यात्तदितरप्रकारस्यासम्भवात्। तत्र द्रव्यादिषडन्यतमस्वरूपत्वन्तु न सम्भवति तमसो द्रव्यादिषड्भ्यो वैधर्म्यात् तदन्यतमभिन्नभावरूपमपि न सम्भवदुक्तिकं तदन्यतमभिन्नभावस्याप्रसिद्धत्वादितिस्वीकुर्वन्ति तार्किकाः। न च तमसस्तेजोऽभावरूपत्वे तत्र रूपवत्ताप्रतीतिर्नोपपद्येत इतिवाच्यं तत्प्रतीतेर्भ्रमत्वेन रूपाभावेऽपि तत्प्रतीतेरुपपन्नत्वादिति तार्किकस्याशयः। परन्तु रूपवत्ताप्रतीतेर्भ्रमत्वस्य बाधमन्तरेणायुक्तत्वादन्यथा सर्वप्रतीतेर्भ्रमत्वस्य वक्तुं शक्यत्वेन प्रमात्मकप्रतीतेरप्रसिद्धत्वेन सर्वेषामपि पदार्थानां प्रमात्मकप्रतीत्यगोचरत्वेन तेषामसद्भावस्याङ्गीकाराच्छून्यवादापत्तिः तस्मात्तमसो नवसु द्रव्येषु वैधर्म्येणानन्तर्भावेऽपि दशमद्रव्यत्वाङ्गीकारे बाधकाभावात्तस्य दशमद्रव्यत्वेन भावरूपत्वमेव तस्य युक्तम्। न च नवैव द्रव्याणीति प्रतिज्ञाहानिरितिदशमद्रव्यत्वमयुक्तमितिवाच्यं नैयायिकप्रतिज्ञाया हानावपि तमसो द्रव्यान्तरमङ्गीकुर्वतां क्षत्यभावात् नहि कस्यचिद्ग्रन्थकृतो विपरीतलेखनं युक्तिबलाद्वस्तुसिद्धौ बाधकमित्यबाधितरूपवत्त्वप्रतीतिसिद्धरूपवत्त्वेन सिद्धस्य द्रव्यत्वस्य नवानन्तर्भूततमोनिष्ठस्य दशमद्रव्यनिष्ठत्वाङ्गीकारे कस्यचित्प्रतिज्ञाहानेरदोषत्वात्। न च तमसो द्रव्यत्वाङ्गीकारे तस्य सावयवत्वेऽनन्तावयवकल्पनागौरवं निरवयवत्वे नित्यत्वापत्त्यालोकनिवर्त्यत्वानापत्तिरितिवाच्यमन्येषाममन्ता-

वयवस्यैव तमसोप्यनन्तावयवकल्पनायान्दोषाभावात् अन्यथा सर्वेषामप्यनन्तावयवभिया द्रव्यत्वमनित्वद्रव्यावलम्बनं कथाशेषमेव स्यात्। मेघमण्डलात्तमसो विद्युत इव जन्माङ्गीकारे अक्लृप्तानन्तावयवकल्पनाया अप्रसङ्गाच्चेतिभाव्यम्मनीषिभिरिति।

## १४—अभेदवादः

प० श्रीराजनारायणशर्मा, नरहन, दरभंगा

यत् कदाचित् समाजसमक्षेऽकाण्डे विद्वत्प्रकाण्डेनापि भारतीयानां धर्म्म इव परमेश्वरोपि सहस्रशाखोस्तीतिविलसितम् स तावल्लौकिकश्चेदस्तु, वैदिकस्तु न केषांचित् प्रेक्षावतां प्रत्यक्षीभवति, महाभागा महामदीया ईशायिनश्चाप्येकमेवेश्वरं भजन्ते, तर्हि कोयमुपहासास्पदमात्मनीन उपन्यासो वर्णाश्रमश्रृंखलानियन्त्रितासु जातिषु। मन्ये दुर्दैवविलसितम् यद्विद्यावाणिज्यशिल्पव्यवसायविधुराः कामपि शान्तिमलभमाना व्यर्थं कलहायन्ते, यत्रतत्र विप्रवदन्ते, इति कृत्वा तुच्छलेखेस्मिन् वेदान्तस्वरूपम्, मोक्षपदप्रवृत्तिनिमित्तम्। संक्षेपतो द्वैताद्वैतविशिष्टाद्वैतवादिनां मतैक्यम्, ब्रह्मस्वरूपप्रदर्शनपूर्वकमोक्षलक्षणम्, पूर्वोत्तरमीमांसयोस्सामञ्जस्यम्। पञ्चानामपि देवतानामेकीकरणम्। हरिहरयोरभिन्नतादिविषयम्, वेदपुराणादिप्रमाणं पुरतः कृत्वा प्रदर्शितवानस्मि।

## १५—अविद्याविचारः

प० श्रीदीनानाथझा, अहमदाबाद

अविद्यास्तमयात्मकमोक्षोपपादनमविद्यास्वरूपनिरूपणमन्तरा अशक्यनिरूपणमित्यविद्यास्वरूपनिरूपणायायासः पूर्वं कृतः। तत्राविद्यास्वरूपे वादिनां विप्रतिपत्तिः। न विद्येत्यविद्या, विद्या च ज्ञानम्। अत्र विद्यया सह समस्यमानो नञः विद्यात्यंताभावं विद्याविरोधित्वरूपं तद्भेदरूपं वाऽर्थं बोधयति। तत्र नाद्यः, तथा सति विद्याभाववद्विद्याऽभावस्याप्यनिर्वचनीयत्वाभावप्रसंगात्। नापि द्वितीयः। विद्याविरोधिनोः संशयविपर्यासयोरविद्यात्वासिद्धेः। न तृतीयः। तथा सति घटादेरखिलप्रपंचस्याविद्यात्वापत्तेः। न चेष्टापत्तिरननुभवात्। नापि ज्ञाननिवर्त्यत्वमज्ञानलक्षणम्। तत्र ज्ञाननिवर्त्यत्वमात्रम् वा। अनादित्वे सति तत्त्वं वा। अनादिभावत्वे

त्वमिति तत्त्वं वा। अनादित्वे सति अनिर्वचनीयत्वं वा। प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वं वा। भ्रमोपादानत्वं वा। नाद्यः तथा सत्युत्तरज्ञाननिवर्त्ये पूर्वज्ञाने व्यभिचारात्। न द्वितीयः। ज्ञानप्रागभावे व्यभिचारात्। न तृतीयः परमाणुश्यामिकायां प्राचीनमतानुसारेण व्यभिचारात्। नापि चतुर्थः विकल्पासहत्वात्। तथाहि तत्रानिर्वचनीयत्वं निर्वचनाभावो वा। निर्वचननिमित्तार्थाभावो वा। नाद्यः इदं रजतमिति शब्देनैव निर्वचनादनिर्वचनीयत्वासिद्धेः। न द्वितीयः निर्वचननिमित्तस्य सतोऽर्थस्य विरहेऽसत्ख्यातिप्रसंगात्, असतो विरहे सत्यत्वप्रसंगात्। नापि पंचमः। संयोगविभागादौ प्रादेशिके व्यभिचारात्। न तुरीयः, आत्मन्यतिव्याप्तेः नापि तत्र प्रमाणम्। अहमज्ञ इति प्रतीतेस्तु ज्ञानाभावविषयत्वेनाप्युपपत्तेः त्वदुक्तमर्थं न जानामीतिप्रतीतेस्तु प्रमाणतया न जानामीत्येवंपरतयाप्युपपादनसंभवात्। तम आसीदिति श्रुतिस्तु प्रलयकालिकजीवीयज्ञानाभावमवबोधयन्ती ज्ञानाभावे एव प्रमाणम् न तु तथाविधेऽज्ञाने। मायां तु प्रकृतिं विद्यादित्यागमस्तु परमेश्वरज्ञानशक्तिं सहकारिभूतं जीवाऽदृष्टमेव वा बोधयति न तु तादृशाज्ञानम्। तदुक्तं -इत्येषा सहकारिशक्तिरसमेत्यादि।

उत्तरम्-अनादिभावरूपत्वे सति विज्ञाननिरस्यत्वमेवाज्ञानस्य लक्षणम्। न च परमाणुश्यामिकायामतिव्याप्तिस्तस्या अनादित्वाभावात्। न च शुक्त्यवच्छिन्नचैतन्यनिष्ठाज्ञानेऽव्याप्तिस्तस्यानादित्वाभावादिति वाच्यम्। तस्याप्यनादित्वात्। केवलमवच्छेदकं तत्र सादि। भ्रमोपादानत्वमपि लक्षणं संभवति। न चात्मन्यतिव्याप्तिः परिणामितयाऽचेतनतया वा निवेशात्। प्रमाणमपि भवति देवदत्तनिष्ठप्रमाणज्ञानम्। देवदत्तनिष्ठप्रमा प्रागभावारिक्तानादेर्निवर्त्तकम्। प्रमाणत्वात्। यज्ञदत्तनिष्ठप्रमाणज्ञानवदित्यनुमानम्। न किंचिद्वेदिषमिति प्रत्यक्षमपि प्रमाणम्। न च ज्ञानाभावविषयकम्, अभावज्ञानस्य धर्मिप्रतियोगिबोधपराधीनत्वनियमेन सुषुप्तौ तदभावात्। त्वदुक्तमर्थं न जानामीत्यन्यथानुपपत्तिरपि प्रमाणम्। स्ववचनव्याघातभयेनार्थान्तरकल्पनाऽसंभवात्। तम आसीदिति श्रुतिरपि प्रमाणम्। न च ज्ञानाभावबोधकत्वम्, नो असदासीत्यादिनाऽभावं व्यावर्त्य तमसः प्रतिपादनात्। मायां च प्रकृतिं विद्यादित्यत्र न परमेश्वरज्ञानशक्तिर्माया। भूयश्चान्ते विश्वमायानिवृत्तिः। 'मायामेतां तरन्ति ते" इत्यादि श्रुतिविरोधात्। तस्मात् तमःशब्देनाविद्याया एव ग्रहणम्। तदुक्तम्-इत्येषा सदसत्प्रकारविधुरा मायेति।

## १६–कैवल्यसाधनविचारः

प० श्रीश्यामसुन्दरझा, सूरत

अनादिवासनावासितप्राणिनिवहो दुःखं जिहासुः सुखाभिलाषुकश्चर्ते कैवल्यान्निरतिशयशान्तिं नैव लभत इति निश्चप्रचं सर्ववादिसम्मतम्। तच्च ब्रह्मानन्दानुभवकैवल्यं भक्त्या ज्ञानेन वेति विजिज्ञासायामन्तःकरणवृत्तिरूपा भक्तिः परापरभेदेन द्विविधा, पुनरेकादशभूमिकभक्तिरस एव कैवल्यप्रद इति भक्तिस्वरूपनिरूपणगर्भं पूर्वपक्षीकृत्य सिद्धान्ते भक्तेः प्रयोजकत्वम्, क्रियादिरूपभक्तेरपि ज्ञानरूपत्वेनैव मुक्तिसाधनत्वमिति च विविधविकल्पेनोपपाद्य परापरभेदेन द्विविधं ज्ञानं साप्तभूमिकं श्रुत्यादिप्रामाण्यात्साक्षान्मुक्तिसाधनमिति निर्णीतम्। ज्ञानेनाक्षराख्यब्रह्मधामप्राप्त्यनन्तरं पुरुषोत्तमप्राप्तिर्भक्त्येति केषाञ्चिन्मतं श्रुतिस्मृतिभ्यामक्षरपुरुषोत्तमयोरैक्योपपादनेन निरस्य ज्ञानेनाक्षरब्रह्मलय एव परमकैवल्यमिति क्रमदिग्दर्शनपुरस्सरमुपसंहृतमस्मिन्कैवल्यसाधनविचार इति विदाङ्कुर्वन्तु।

---

## १७–जीवपरिमाणविचारे विभुत्वस्थापनम्

प० श्रीखड्गनाथमिश्र, उदयपुर

जीवो मध्यपरिमाणो वा अणुपरिमाणो वा परममहत्परिमाणो वा अपरिमाणो वा। परस्परविरोधे हि न प्रकारान्तरस्थितिः। नैकतापि विरुद्धानामुक्तिमात्रविरोधत इति न्यायेन प्रकारचतुष्टयातिरिक्तप्रकारान्तरस्यात्रासम्भवात्। तत्र तावन्नाद्यः तस्य शरीरात्मत्ववदापाततः प्रतिभासमानत्वेपि तद्वदेव विचारबाध्यत्वात्। तथाहि शास्त्रप्रमाण्यवादिभिरास्तिकवर्य्यैः स्वकृतकर्मणां स्वस्मिन्नेव भोगस्योपपत्तये आत्मपदार्थनित्यत्वस्यावश्यमन्तव्यत्वेन शरीरस्य प्रात्यक्षिकनाशविशिष्टतया तदनुपपत्तिः। अनित्येपि तस्मिन्नात्मत्वस्वीकारे एतच्छरीरकृतकर्मणामेतच्छरीरनाशे एतदात्मनि भोगाभाव इतिकृतहानिः शरीरान्तरेण च एतच्छरीरकृतकर्मणां भोगे अकृताभ्यागमश्चयथा प्रसज्येयाताम् तथैवात्मनः शरीरपरिमाणात्मकमध्यपरिमाणपक्षेऽपि यतो हि शरीरपरिमाणस्य शरीरोपचयापचयादिना परावर्तमानत्वेनानित्यत्वात् घटादिदृष्टान्तेनापि मध्यपरिमाणमात्रस्यानित्यत्वमेव यद्विशेषयोः कार्य्यकारणभावस्तत्सामान्ययोरपीति न्यायेन प्रतियोगितया नाशसामान्यं प्रति तादात्म्येन मध्यपरिमाणमात्रस्य कारणत्वात्। तथा च यथा जलगतसूर्य्यप्रतिबिम्बं जलवृद्धौ वर्धत इव जलह्रासे

हसतीव न च वास्तविकं तथा। तथैवेहापि मध्यपरिमाणशरीरोपाधिमहिम्ना जीवस्तथा प्रथते न च वास्तविकस्तथा। नापि द्वितीयः। तथासति द्रव्यनिष्ठविषयतासम्बन्धेन प्रत्यक्षत्वावच्छिन्नम्प्रति समवायेन महत्त्वस्य कारणतया अणोरात्मनो मानसप्रत्यक्षानापत्तेः स वा एष महानज आत्मा इत्यादि व्यापकत्वबोधकबहुश्रुतिविरोधापत्तेश्च। चतुर्लक्षण्या शारीरकमीमांसया तात्पर्यनिर्णायकैः उपक्रमोपसंहारादिभिः षड्भिर्लिङ्गैः सकलवेदान्ततात्पर्यविषयतया प्रतिपादितस्य जीवब्रह्माभेदस्यानुपपत्तेश्च ब्रह्मणो व्यापकत्वेन तवाप्यनुमततयाणुव्यापकयोस्तादात्म्यासम्भवात् युगपत्पादे मे दुःखं हस्ते मे सुखमित्यादिशरीरव्यापकसुखदुःखानुभवस्याप्यनुपपत्तेश्च। कथञ्चित्तदुपपादनेऽपि अणोरात्मनस्तत्तदनन्तशरीरप्रदेशेऽनन्तगतिस्वीकारे कल्पनागौरवस्यानुत्तरणीयत्वात्। प्रकारान्तरेणापि तत्पक्षे बहुविधगौरवस्य मुख्यनिबन्धे प्रतिपादितत्वाच्च। नापि तृतीयः बालाग्रशतभागस्य इत्याद्यणुत्वबोधकबहुश्रुतिविरोधात्। तथा सति सर्वात्मनांसर्वगतत्वेन चैत्रचरणलग्नकण्टकेन चैत्रवेदनोत्पादसमये अन्येषामप्यात्मनां तदापत्तेश्च। आत्मत्वमणुवृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातित्वादिविरोधिसाधकानुमानबाधितत्वाच्च। नापि चतुर्थः द्रव्यस्य परिमाणवत्त्वनियमादिति चेन्न। तृतीयपक्षस्यैव सकलदोषपङ्कप्रक्षालनसम्भवेनाभ्युपगन्तुमर्हत्वात् विभुत्वेनाङ्गीकृतेश्वरस्यास्मदादिशरीरकृतकर्मभोगाभावायाश्रितप्रकारस्येहाप्याश्रयेण विभुत्वपक्षीयद्वितीयदोषनिरासस्सम्भवात् अणुत्वबोधकश्रुतीनां चात्मदुर्विज्ञेयत्वबोधनपरत्वेन विभुत्वपक्षेपि उपपत्तिसम्भवात्। अत एव अणोरणीयान् इत्यादि श्रुतिरपि संगच्छते। विरोधिसाधकानुमानस्य चाप्रयोजकत्वादुपाधिकवलितत्वाच्चेति संक्षेपः।

## १८—ईश्वरसिद्धिः

प० श्रीराजेन्द्रचौधरी, भावनगर

ननु न्यायादिदर्शनशास्त्रेष्वीश्वरास्तित्वं दृश्यते, तत्कथं सङ्गच्छते, शरीरातिरिक्तस्य चेतनत्वमनभ्युपगच्छतः कार्य्यकारणभावं विलोपयतस्तन्मूलकतर्काधीनव्याप्तिनिश्चयासम्भवेनानुमानमात्रमुच्छेदं साधयतश्चार्वाकस्य मतेऽनुमानप्रमाणेनेश्वरस्य साधयितुमशक्यत्वात्। नापि प्रमाणान्तरेण, अनभ्युपगम्यमानत्वात्। नापि वेदेन, तद्व्याख्यानामनृतत्वपौनरुक्त्यादि दूषणगणग्रस्तेन प्रामाण्यास्वीकारात्, ईश्वरासाधकवेदस्याप्युपलभ्यमानत्वाच्च।

किञ्च मीमांसकानाम्मतेऽपि नेश्वरसिद्धिः सम्भवति। वेदवक्तृतयेश्वरमभ्युपगच्छतो नैयायिकस्य वेदनित्यत्वेनासम्भवात्, महाजनपरिगृहीतत्वेन च वेदप्रामाण्यग्रहात्। न च महाप्रलयसद्भावाद्वेदस्यानित्यत्वमिति वाच्यम्, अहोरात्रस्याहोरात्रपूर्वकत्वनियमाद्युगपददृष्टस्य वृत्त्यनिरोधे उत्तरसर्गे जन्माभावापाताद्ब्राह्मणस्य ब्राह्मणतो जन्मासम्भवात् सर्गादौ शिक्षयितुरभावेन च शक्तिग्रहासम्भवेन महाप्रलयानभ्युपगमात्। किञ्चानुपलब्धिमात्रस्याभावग्राहकतयेश्वरानुपलब्ध्येश्वराभावस्यापि सिद्धत्वादतीन्द्रियवस्तूनां विलोपस्येष्टत्वात् कथमपि नैयायिकैरीश्वरस्यास्तित्वं स्वीकर्तुं न शक्यते। किञ्चेश्वरसत्त्वेऽपि तस्य प्रमाणत्वन्न सम्भवति प्रमाकरणतायास्तत्र [illegible]रहात्। ईश्वरप्रमायाः नैयायिकमते नित्यत्वादीश्वरज्ञानस्याऽपि गृहीतग्राहित्वेनाप्रमात्वादित्यप्रमाणपुरुषवचनं कः श्रद्दधेदिति सर्वमेव नैयायिकानामाकुलं स्यात्। किञ्च क्षित्यङ्कुरादिकर्तृत्वेनापि नेश्वरसिद्धिः सम्भवति, कार्य्यकारणयोरभिन्नत्वेन प्रकृतिस्थितानामेवाङ्कुराणाङ्कारणव्यापाराविर्भावः सम्भवति सतो कार्यस्यैवोत्पत्तिदर्शनादितिचेन्न। अनुमानगम्यस्यैवेश्वरस्य सत्त्वात्। तथाहि शरीरानपेक्षोत्पत्तिकम्बुद्धिमत्पूर्वकङ्कारणवत्त्वादित्यनुमानेनेतरबाधसहकारान्नित्यबुद्धिमत्पूर्वकत्वसिद्धावीश्वरस्यापि सिद्धिसम्भवात्। न च व्यभिचारशङ्कासम्भवे व्याप्तिनिश्चय एव न सम्भवतीति कथमनुमानम्प्रमाणमिति वाच्यम्। तर्केणैव व्यभिचारशङ्कायाः विघटनसम्भवात्। जगत्कार्यमात्रस्य किञ्चिदवधिकत्वदर्शनेन कार्यकारणभावविलोपासम्भवात्। न च तर्कस्याऽपि व्याप्तिग्रहमूलकत्वेनानवस्थेति वाच्यम्। यादृशतर्ककारणव्याप्तिग्रहविघटकीभूताशङ्का तर्काभावातिरिक्तकारणप्रतियोगिकाभावादेव तर्कपूर्वन्नास्तरति तादृशस्थले तर्ककारणव्याप्तिग्रहस्य विघटनासम्भवात्, शङ्काविघटनाय तर्कान्तरस्यानावश्यकत्वाच्चानवस्थापरिहारसम्भवात्। अथापि यद्यनुमानन्न मन्यन्ते चार्वाकास्तदैवन्ते प्रतिबोधनीयाः—भवादृशे दूरेत्यादि। किञ्चाहं सर्वस्य प्रभवो मत्तः सर्वम्प्रवर्तते' इत्यागमघटकास्मदादिपदेनाऽपि स्वतन्त्रोच्चारयितुरीश्वरस्य सिद्धिसम्भवात्, 'यतो वेमानि भूतानि जायन्ते' इत्यादिवेदगम्यत्वाच्च ब्रह्मरूपेश्वरस्य सिद्धिसम्भवात्। वेदाः प्रमाणमीश्वरोक्तत्वादित्यनुमानेन वेदप्रामाण्यसिद्धेः। न च वेदस्य नित्यत्वादीश्वरोक्तत्वं स्वरूपासिद्धमिति वाच्यम्। वेदाः न नित्याः वाक्यत्वात्, महाभारतवदित्यनुमानेन वेदनित्यत्वप्रतिषेधात्। अत एवोक्तमाचार्य्यैः उद्देश एव तात्पर्यं व्याख्याविशदृशः सतीत्यादिकम्।

नापि महाप्रलयो नास्तीति वक्तुं शक्यते, आचार्य्यैस्साधितत्वात्, अहोरात्राव्यवहितपूर्वकमहोरात्रमित्यनुमानस्यापि 'वर्षादिवद्धवोपाधिरित्यादिना दूषितत्वात् नापि महाप्रलयाभ्युपगते सर्गादौ शिक्षयितुरभावात् प्रयोज्यप्रयोजकवृद्धत्वाभावः सर्गिशरीरम्परिगृह्णत ईश्वरस्यैव प्रयोज्यप्रयोजकवृद्धत्वसम्भवात्। वेदस्यानित्यत्वञ्च जन्मसंस्कारविद्यादेरित्यादिना प्रतिपादितत्वात्।

नाप्यनुपलब्धिमात्रेणाभावमात्रस्य सिद्धिः, प्रतियोगितद्व्याप्येतरसकलकारणसमवहितत्रविशिष्टानुपलब्धेरेवाभावसाधकत्वात्। अन्यथा भवन्मते ईश्वरस्यालीकतयाऽलीकस्याभावप्रतियोगित्वासम्भवेनेश्वराभावस्य वक्तुमशक्यत्वात्। अभावाभावस्य वस्तुन एव प्रतियोगित्वात्।

नापीश्वरे जगत्कर्तृत्वाभावोऽपि भवता साधयितुं शक्यते, अभावाधिकरणताया एव पारमार्थिकतयाऽभावविशेष्यतास्वरूपाया ईश्वरस्यालीकत्वेन तद्विशेष्यकाभावानुमितेरसम्भवात्।

नापीश्वरस्तावदप्रमाणम्भवितुमर्हति, प्रमाश्रयत्वरूपस्यैवायोगव्यवच्छेदस्येश्वरे प्रमाणत्वात्। नापीश्वरज्ञानमप्रमा, तद्वति तत्प्रकारकज्ञानस्येश्वरे सत्वान्नित्यज्ञानवत ईश्वरस्य वेदैरपि प्रतिपादितत्वात्।

नापि क्षित्यङ्कुरादिकं सकर्तृकं कार्यत्वादित्यनुमानस्याप्यप्रसिद्धिः, ध्वंसप्रतियोगित्वजन्यताविशिष्टक्षितेरेव पक्षत्वात्, उपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिजन्यत्वस्य साध्यत्वात्, सत्तावत्वे सति प्रागभावप्रतियोगित्वस्य हेतुत्वसम्भवात्।

न च प्रकृतिः कर्त्रीति वाच्यम्चेतनस्यैव कर्तृत्वात्, 'चेतनोऽहङ्करोमीति प्रतीतेः। प्रकृत्यादेरेवानभ्युपगमाच्चेत्यास्तां विस्तर इति।

## १६—मोक्षनिरूपणम्

पं० श्रीरामचन्द्रमिश्र, मुजफ्फरपुर

प्राणिमात्रस्य सुखैषणोन्मुखत्वेन मोक्षे समादरावतारः। मोक्षस्य सुखरूपता, नित्यत्वेन पुरुषार्थान्तरापेक्षयाऽभ्यर्हितत्वञ्च। मोक्षस्वरूपनिरूपणे मतानि चार्वाकाणाम्, जैनानाम्, बौद्धानाम्, वैशेषिकाणाम्, साङ्ख्यानाम्, नैयायिकानाम्, मीमांसकानाम्,

शैवानाम् । अद्वैतवादाभिमतं मोक्षस्वरूपम् । श्रवणमनननिदिध्यासनानां अन्यथासिद्धत्वाशङ्कापरिहारः । अविद्याया लक्षणं, तत्र मानञ्च । शब्दस्य प्रत्यक्षप्रमाजनकत्वसमर्थनम् । मोक्षभेदः ।

## २०—चाक्षुषं ज्ञानम्

प० श्री आनन्दझा, न्यायाचार्य, काशी

संसारेऽस्मिन् न कोऽपि खलु भवेत् एवंविधः चक्षुष्मान् यो नो नाम कुर्य्यात् चक्षुषा ज्ञानं पदार्थस्य । सति चैवं स्वाभाविकी इयं समुदेतुमर्हति विचारशीले प्रेक्षावतां चेतसि 'तत्प्रक्रियाविषयिणी जिज्ञासा—यत् कथं नाम सञ्जायते ज्ञानं चाक्षुषम् ? चक्षुश्च कृष्णादिसारं गोलकमेव आहो स्वित् तदतिरिक्तमतीन्द्रियं इत्यादि । एतन्निर्णयाय गवेषणायां विहितायां कृष्णसारं गोलकं एव चक्षुः, न तदतिरिक्तमतीन्द्रियं तत् । विषयदर्शने च विषयेण सह न सन्निकर्षस्य प्रयोजनं चक्षुषः । अप्राप्यैव विषयं तत् तद्ग्राहकं भवति इति सञ्जायते तत एव तथाविधात् ज्ञानं चाक्षुषं इति प्रायसो वेदप्रामाण्यमनभ्युपेयुषां सर्वेषां बौद्धचार्वाकादिदार्शनिकाणां सम्मतः एकः पक्षः ।

कृष्णसारात् पिङ्गलसारात् वा गोलकात् अतिरिक्तं विषयदेशपर्य्यन्तगामि सत् प्राप्यग्राहकं तत् इति सञ्जायते तस्मात् प्रोक्तस्वभावापन्नात् ज्ञानं चाक्षुषं इति वेदप्रामाण्यमभ्युपेयुषां सर्वेषां न्यायवैशेषिकसांख्यपातञ्जलमीमांसावेदान्तोपदिष्टमार्गमनुगच्छतां महाविदुषां अपरः पक्षः । सति चैवं मतद्वैधे यद्यपि चक्षुर्गोलकवादपोषिकाः या नाम युक्तयः समुपन्यः स्तावदवैदिकैस्ता प्रप्रच्छ्रताकिकैः, तन्निरासो विहितो महता परिश्रमेण प्राचीनैर्वेदप्रामाण्यसंरक्षणदीक्षणैः महामनीषिभिः ।

परन्तु ततः परवर्तिन आधुनिकाः पाश्चात्यवैज्ञानिकाः याभिर्युक्तिभिर्भङ्ग्यन्तरेण प्राचीननास्तिकगणाहतं गोलकचक्षुर्वादं परिपुष्कुर्वन्ति तन्निरासः इदानीन्तनैः वेदप्रामाण्यमुपगच्छद्भिः न्यायादिदर्शननिकरविचारचतुरैः मनीषिभिः विधातुं शक्यते न वा ? शक्यते चेत् कया रीत्या ? इति महान् गवेषणीयो विषयः ।

## २१—द्वैतादिवेदान्तसारः

पं० श्रीश्यामसुन्दरझा, सूरत

ईश्वरः सविशेषो निर्विशेषो वा, जीवोऽपि परमात्मनः सर्वथा भिन्नः किञ्चिदंशभिन्नः, सर्वथाऽभिन्नो वा, प्रतिशरीरमेकोऽनेको वा, जगदपि सत्यमसत्यं वा, निःश्रेयसं किं, कथञ्च तदिति, जिज्ञासायां द्वैतद्वैताद्वैतशुद्धाद्वैत-विशिष्टाद्वैतसिद्धान्तानां, मतमतिसंक्षेपतः संगृहीतम्।

---

## २२—सांख्यतत्त्वकौमुद्याक्षेपपरिहारः

### पूर्वपक्षः

प० श्रीदुर्गाधरझा, दरभंगा

(१) षष्ठकारिकायाम् "दृष्ट" पदं प्रत्यक्षप्रमाणबोधकम्। अतः प्रमाणत्रितये कस्य प्रमाणस्य कः विषयः अस्यैवोत्तररूपा षष्ठकारिकेति।

(२) ईश्वरकृष्णमतेन प्रधानपुरुषौ द्वावेवातीन्द्रियौ। तदतिरिक्ताः सर्वे पदार्थाः प्रत्यक्षवेद्याः। तदनुसारेणैव प्रत्यक्षलक्षणं कर्तव्यम्।

(३) अत्र शास्त्रे 'भूत'शब्देन न घटादिस्थूलभूतान्यभिप्रेतानि किन्तु परमाणुकल्पातीन्द्रियः कश्चन सूक्ष्मपदार्थ एव। तत्पर्यन्त भूतसृष्टिरेवात्र शास्त्रे निरूपिता।

(४) महत्तत्वादेरनुमानगोचरत्वे सर्वेषामेव पदार्थानाम् प्रत्यक्षानुमानाभ्यामेव ज्ञानं भविष्यतीति शब्दप्रमाणस्य वैयर्थ्यमनिवार्यं स्यात्।

### समाधानसंक्षेपः

(२) प्रकृतिपुरुषभिन्ना अपि तन्मात्रादयः अतीन्द्रियत्वेन ईश्वरकृष्णस्याभिमता: तस्मात् महत्तत्त्वादयो नेन्द्रियतात्पर्य गोचरत्वेन 'ग्रन्थतात्पर्य'विषयाः। यतः व्यक्तत्वं न प्रत्यक्षवेद्यत्वं किन्तु उपादेयत्वरूपमतः महदादौ व्यक्तत्वसत्त्वेऽपि न प्रत्यक्षविषयत्वावश्यम्भावनियमः। महत्तत्त्वादेरपि यौगिकप्रत्यक्षविषयत्वमस्त्येव। एतदुपपादनाय तृतीयपृष्ठस्थालोचना द्रष्टव्या।

(३) अस्मिन् शास्त्रे घटादिप्रत्यक्षप्रमितिसमर्थस्य लौकिकप्रत्यक्षप्रमाणस्य, तन्मात्रादिप्रत्यक्षप्रमितिसमर्थस्योभयस्यापि

निरूपणमस्त्येव । एतन्निष्पादनाय "साम्प्रतकालं बाह्यम्" (३३का०) इत्यादिकारिकाघटित४पृष्ठस्था १५पंक्तिस्थालोचनाऽनुसन्धेया ।

(४) आक्षेपकवाक्ये प्रत्यक्षप्रमाणस्य लक्षणं तत्त्वकौमुदुयुक्त-(तत्त्वकौमुदी पृ० ५६ पं २) प्रत्यक्षप्रमाणलक्षणानुकूलमेव । एवं स्थिते पृथमाक्षेपस्वीकारेपि न कापि क्षतिः ।

## २३—जीवगोस्वामिमतेन भक्तिविचारः

प० श्रीहृषीकेशशास्त्री, दरभंगा

तथापि आत्मारामत्वं ग्राह्यम् प्रेमविरोधि यत् परमपूज्यपादेन श्रीसनातनगोस्वामिना उक्तं तस्य श्रीबृहद्भागवतामृतं तथापि नात्मारामत्वं न तु ग्राह्यं प्रेमविरोधि यत् । अस्य कोऽर्थविशेषः यत् इतः इत्यर्थं स्वीकृत्य आत्मारामत्वस्य प्रेमप्रतिप्राद्यत्वं तेन च तस्य अग्राह्यत्वं कल्पनीयम्यदि तथा क्रियेत तर्हि विरोध आपद्येत श्रीकृष्णदासकविराजस्य श्रीचैतन्यचरितामृतेन सह ग्रन्थे तस्मिन् आत्मारामत्वस्य नानाविधत्वं पार्श्वयुक्तं पृदर्श्य केवलं ज्ञानत्रयात्मारामस्य भजने वैमुख्यं पृकाशयन् अपरेषां च····'भजने शीलत्वं भजनोन्मुखत्वं भजते योग्यतां च वा पृकटीकृतवान्अस्मिन् पृसंगे आत्मशब्दस्य च विश्वपृकाशाभिधानमतेन सप्तविधं अर्थं पृदर्श्य सर्वत्रैव सामञ्जस्यं विधाय स्वमतं दूरीकृतवान् श्रीलकविराजमहोदयः ।

# व्याकरणविभागः

## १—लिङ्गवचनविचारः

पं० श्रीदीनबन्धुझा, इसहपुर, दरभंगा

लिङ्गवचनविचारनाम्नि ग्रन्थे पुंस्त्वादिलिङ्गविषये एकवचनादिरूपवचनविषये च विचारणास्तीति सामान्यतो ग्रन्थनाम्नैवावगन्तुं शक्यते।

विशेषतस्त्वत्र लिङ्गविचारे द्वाविंशतिर्विचाराः तथा वचन-विचारेपि द्वाविंशतिर्विचाराः सन्ति। ते च ग्रन्थारम्भात् प्रागुल्लिखितविषयोपक्रमणिकया बोध्याः।

प्राधान्येन तु तच्छब्दे लिङ्गविचारः, विशेष्यनिघ्ना लौकिकलिङ्गबोधका न वा, लिङ्गाविवक्षानिर्णयः, पुंस्त्वादिलिङ्गलक्षणानि, अमरादिशब्दानां शास्त्रीयलिङ्गाबोधकत्वे दोषः,सामान्ये नपुंसकताविचारः, ब्राह्मणादिशब्दानां नपुंसकव्यक्तौ प्रयोगोपपत्तिः, लिङ्गस्य प्रसिद्धाऽप्रसिद्धत्वज्ञानोपायः, वचनविचारे मैथिली दारा इति बहुवचनस्य वैयाकरणमते तार्किकमते च साधुत्वव्यवस्थापनम्, समानवचनकत्वनियमे विचारः, नीला घटः, इदं घटः इत्यादिप्रयोगाभावे बीजम्, सुन्दरा दारा ययुरित्यत्र सुन्दर। इति ययुरिति च बहुवचनस्य व्याकरणेन कथं साधुत्वम्, या विशेष्येषु दृश्यन्ते इति कारिकाया. विशदव्याख्या, विंशत्यादिशब्दे वचनविचारः, प्रकृतिविकृतिभावस्थले प्रकृतिगता विकृतिगता वा संख्या तिङाभिधीयते, आरोपादिस्थले वचनविचारः, नित्यबहुवचनान्तशब्दसंग्रहः।

---

## २—पाणिनिसूत्रविचारः

पं० श्रीभार्गवशास्त्री जोशी, बम्बई

हलोऽनन्तराः संयोग इति सूत्रे भाष्ये एकैकस्य संयोगसंज्ञायां दोषप्रदर्शनावसरे क्वचिदितिशब्दप्रयोगः कृतः क्वचिच्च न क्रियते।

यथा—किञ्च स्याद्यद्येकस्य संयोग संज्ञा स्यात्? इह निर्यायात् निर्वायात्, 'वाऽन्यस्य संयोगादेः, इत्येत्वम्प्रसज्येत। इह च संहृषीष्टेति, 'ऋतश्च संयोगादेः,' इतीट् प्रसज्येत। इह च निर्यातो निर्वातः, 'संयोगादेरातो धातोर्यण्वतः,' इति निष्ठानत्वम्प्रसज्येत

इति । एताहशसङ्कीर्णव्यवहारोपपत्त्यभावेऽत्रत्येति शब्दवद्भाष्ये सर्वत्रापि स शब्दो निरर्थकः स्यात्। तथा च शास्त्रस्याप्रामाण्यमापद्येत, तच्च संङ्कीर्णव्यवहारस्य सहेतुकत्वोपपादने एव निरसितुं शक्यम् । हेतुश्च-पूर्वोऽनन्त्वेनोपात्ते यच्छास्त्रापत्तिः प्रदर्श्यते तदभावेऽपि ताहशमेव रूपं यत्र सिद्ध्यति तत्र न इतिशब्द-प्रयोग इति । यथा निर्यायादितिरूपं वर्णस्यैकस्य संयोगसंज्ञायामप्येत्वस्य वैकल्पिकत्वेन सेत्स्यति । 'निर्वाणो वाते' इत्यनेन वाते नत्व-निपातमादवाते निर्वात इति स्यादेवेति न तत इतिशब्दप्रयोगः । तदेतदनेकोदाहरणप्रदर्शनेन यावत्प्रत्युदाहरणोत्तरमितिशब्द-प्रयोगाप्रयोगौ भाष्यकाराणां साभिप्रायौ न निर्हेतुकाविति महता प्रयत्नेन प्रसाधितम् ।

---

## ३—नागेशमतविचारः

प० श्रीविदेश्वरझा, मुजफ्फरपुर

नागेशविरचितपरमलघुमञ्जूषास्थ धात्वर्थविचारे (अभिधाना-नभिधानविषये) व्यापारेणाश्रयाक्षेपात् कर्तुरभिधानमित्यादिमीमांसकेन प्रदर्शितम् ।

अत्र ग्रन्थे "प्रधानपद" निवेश आवश्यक इति मे विचारः । अन्यथा गुरुः शिष्याभ्यां पाचयतीत्यादिग्रन्थस्यासङ्गतिः स्या-दिति ।

## ४—पाणिनीयशब्दशास्त्रस्य सर्वातिशायित्वम्

प० श्रीपुरुषोत्तमशास्त्री रानाडे, आनन्दाश्रमः, पूना

इह जगति यो लौकिकव्यवहारः प्रवर्तते तत्र भाषैव प्रधानतमं साधनम् । इदमेव इदमन्ध कृत्स्नं जायेत भुवनत्रयम् । यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते । इति पद्येन दण्डिना प्रत्यपादि । एतस्मिन् भुवनाभोगे सन्ति पुनर्भूयस्यो भाषाः । या वा का वा भवतु भाषापरं सा व्याकरणनियमसूत्र-संबद्धैव शोभते नेतरा । व्याकरणं हि भाषाया जीवातुभूतम् । व्याकरणान्यपि बहुलान्यासन् । परं तेषु पाणिनीय-व्याकरणमेव सर्वातिशायि नान्यत् । धीरैरालोकितप्रान्तममेधोभिरसूयितम् ।। सदोपभुक्तं सर्वाभिरन्यविद्याकरेणुभिः इति पद्येन भामहेन काव्यालंकारे व्याकरणं प्रशंसितम् । पाणिनेरष्टाध्याय्यां भूयसां शाकल्यशाकटायनगार्ग्य गालवादीनां प्राचीनवैयाकरणानां

नामोल्लेखतस्तेषां व्याकरणान्यासन्नेव । तत्रत्यं यत्किञ्चित्कलत्वं तदशेषमपि दूरीकृत्य भगवता पाणिनिना स्वकीयं व्याकरणं प्रणीतम् । तत्रापि पुनर्यदवशिष्टं तत्कात्यायनेन वार्तिकैः प्रपूरितम् । सूत्रवार्तिकेष्वपि पुनर्यन्न्यूनमासीत्तत्पतञ्जलिना भाष्ये निःसार्य शास्त्रमेतत्परिपूर्णभावं प्रापितम् । पाणिनीयव्याकरणस्य सर्वातिशायित्वे पुनरेतदेव विशिष्टं निदानं यत्, यथा सूत्रकृतः प्राक्सूत्रकृतः, वार्तिककाराद्वार्तिककाराः, तथा भाष्यकारादपि भाष्यकारा अभवन् । तेनैवमभूद्यत्, प्राक्तनवार्तिकेषु तथैव च प्राक्तनभाष्येष्वपि यानि खलु वैगुण्यान्यासन् तानि निःशेषयितुं वार्तिकभाष्यकारयोरुभयोरप्यवसरः संप्राप्तः । तेन 'घृष्टं घृष्टं पुनरपि पुनश्चन्दनं चारुगन्धम्' इति न्यायेन पारम्परिकैर्विविधैः संस्कारैः सुसंस्कृतत्वात्पाणिनीयमेव व्याकरणं परिणतसिद्धान्तमत एव सर्वत्र शिरोधार्यं प्रबभूव । अन्यच्चैतदपि न विस्मर्तव्यं यत्तत्र सर्वेऽपि व्याकरणशास्त्रोपकारकाः, धातुपाठःगणपाठः शिक्षा लिङ्गानुशासनमित्येते विषया भगवता पाणिनिनैव प्रणीताः । तेन तत्र मनागपि वैकल्यं नोर्वरितम् । अन्यच्च तदेव व्याकरणं लक्ष्यीकृत्य कैयटजयादित्यहरदत्तभट्टोजिदीक्षितनागेशभट्टपुरोगा दिग्गजायमानाः पण्डितप्रकाण्डा महीयसीं ग्रन्थसंसंपत्तिं विनिर्मिमिरे । तस्मात् 'मधुरं हि पयः स्वभावतो ननु किं तत् सितशर्करान्वितम् ।' इति न्यायेनोत्तरोत्तरं तच्छास्त्रं जगर्ज । इतरेषां शाकटायनसारस्वताशुबोधादीनां व्याकरणानां सर्वाङ्गपरिपूर्णत्वाभावात्, तेषु च भाष्यवार्तिकयोरभावात्, अग्रेऽपि पुनस्तेषु व्याख्योपव्याख्यादिविस्तराभावाच्च तान्यल्पप्रचाराण्यभूवन् ।

---

## ५—व्याकरणसूत्रोपरिस्थभाष्यवार्तिकार्थविचारः

श्रीशिवरामदत्तात्रेयजोशी, पूना

गुणवचनब्राह्मणादिभ्यः कर्मणि च वर्णदृढादिभ्यः ष्यञ् च इत्यादिसूत्रस्थभाष्यवार्तिकार्थविचारो निबन्धेऽस्मिन् प्रवर्तते ।

---

## ६—परमलघुमञ्जूषा

प० श्रीविदेश्वरझा, मुजफ्फरपुर

यत्तु मीमांसकाः फलं धात्वर्थो व्यापारः प्रत्ययार्थ इति तन्न । लः कर्मणीत्यादिसूत्रविरोधापत्तेः । नहि तेन व्यापारस्य प्रत्ययार्

र्थता लभ्यते। किञ्च पचति पक्ष्यति पक्ववानित्यादौ फूत्कारादि-प्रतीतये तत्रानेकप्रत्ययानां शक्तिकल्पनापेक्षयैकस्य धातोरेव शक्तिकल्पनोचिता। किञ्च फूत्कारादेः प्रत्ययार्थत्वे गच्छतीत्यादौ तत्प्रतीतिवारणाय तद्बोधे पच् समभिव्याहारस्यापि कारणत्व-कल्पनेऽतिगौरवम्। किञ्च सकर्म्मकाकर्म्मकव्यवहारस्योच्छेदा-पत्तिः। न च प्रत्ययार्थव्यापारव्यधिकरणफलवाचकत्वं सकर्म्मक-त्वं, तन्मते तत्समानाधिकरणफलवाचकत्वमकर्म्मकत्वञ्च, प्रत्य-यार्थव्यापाराश्रयत्वं कर्त्तृत्वम्। घटं भावयतीत्यादौ णिजर्थ-व्यापारव्यधिकरणफलाश्रयत्वेन कर्म्मत्वमिति वाच्यम्। अभिधानान-भिधानव्यवस्थोच्छेदापत्तेः। न च व्यापारेणाश्रयाक्षेपात् कर्त्तुर-भिधानम्। कर्म्माख्याते च प्रधानेन फलेन स्वाश्रयाक्षेपात् कर्म्मणो-ऽभिधानमिति वाच्यम्। जातिशक्तिवादे जात्याक्षिप्तव्यक्तेरिवाश्रयप्रा-धान्यापत्तौ क्रियाप्रधानमाख्यातमिति यास्कवचो विरोधापत्तेः। किञ्च फलस्य धातुना तदाश्रयस्य चाक्षेपेणैव लाभसम्भवेन लः कर्म्मणीत्यस्य वैयर्थ्यापत्तेः। किञ्च भावविहितघञादीनां व्यापारा-वाचकत्वे ग्रामो गमनवान् इत्याद्यापत्तिः। तद्वाचकत्वे तेनापि स्वाश्रयाक्षेपे कर्त्तुरभिधानापत्तिः। किञ्च गुरुः शिष्याभ्यां पाचयती-त्यादौ हेतुमति चेति सूत्रबलात् प्रयोजकव्यापारस्य णिजर्थत्वे स्थिते प्रयोज्यव्यापार आख्यातार्थो वाच्यः, एवञ्च संख्यायाः स्ववाचकाख्यातार्थान्वयिन्येवान्वयाच्छिष्याभ्यामिति द्विवचनानापत्तिः, पाचयतीत्येकवचनानापत्तिश्च। गुरोरनभिधानेन तत्र प्रथमाया अनापत्तेश्च शिष्यशब्दात्तदापत्तेश्चेत्यन्यत्र विस्तरः।

## ७—कर्मानुक्तत्वविचारः

पं० श्रीकृष्णमाधवझा, बम्बई

• व्याकरणस्य विशेषप्रयोजनं नापभाषितवै न म्लेच्छितवै म्लेच्छा मा भूमेत्यवोचत् भगवान् पतञ्जलिः सामान्यफलं सुखं दु-खाभावश्च तत्साधकान्यपि फलत्वेनोपचरितानि धर्मार्थकाममो-क्षरूपाणि। धनाद्धर्मस्ततः सुखमिति लोकप्रसिद्धिः। मोक्षस्तु नित्यसुखाभिव्यक्तिरूपः सुखविषयकत्वेनोपचरितः एकः शब्दः सम्यग्ज्ञातः सुष्ठु प्रयुक्तः स्वर्गे लोके च कामधुग्भवतीत्यनुमेयो धर्मो व्याकरणं विना न संभवति अन्येषां प्रयोगस्य सम्यग् ज्ञाना-भावात् सुष्ठु प्रयुक्तत्वाभावाच्च व्याकरणविद एव तथाकुर्वन्ति

नान्ये इति विदितमेव सर्वेषाम् अध्यापनादिनाऽर्थलाभः कामस्य का कथा मोक्षोऽपि व्याकरणप्रतिपादितसम्यग्ज्ञानात् स्फोट-प्रमात्मकज्ञानादेव । तमेव विदित्वाऽतिमृत्युमेति नान्यःपन्था विद्यतेऽयनायेति प्रतिपादितत्वात् । न स पुनरावर्तत इति मोक्षस्या-विनाशित्वेन प्राधान्यं नान्येषां तेषां विनाशित्वात् क्षीणे पुण्ये मर्त्यलोकं विशन्ति लक्ष्मीः चञ्चला प्रसिद्धैव कामस्य का कथेति विनाशित्वमवधेयम् । नापभाषितवै इत्यादिरपि दुःखाभावसा-धकत्वेनोपचरित एव । लघूपायेन शब्दज्ञानाय व्याकरणमकार्षीत् तत्रापि प्रकृतिप्रत्ययविभागञ्च । देवदत्तो घटं क्रियत इति म्लेच्छ-शब्दवारणायानभितमधिकृत्य कर्मणि द्वितीयेत्यनुशासनञ्च प्रणी-तवान् । हन्त पश्यामि पचि कर्मानुकूलत्वेऽपि पक्वोदनो भुज्यत इति समर्जनि महान् सन्देहः कोऽपशब्दोऽनपशब्दश्च क इति । कर्मवाचकपदसमभिव्याहृतपदाहितत्वसामान्याभावस्य द्वितीया-नियामकत्वे भोक्तव्यमोदनं पचतीत्यनुपपन्नमितिचेत् धातुविशिष्ट-तात्पर्यविषयताशून्यत्वं कर्मत्वानभिहितत्वमित्यस्यैव वक्तव्यत्वात् । धातुवैशिष्ट्यञ्च तात्पर्यं स्ववाच्यप्रधानीभूतव्यापारविशिष्टविशेष्यता-श्रयविषयकबोधविषयकत्वेन ॥ व्यापारवैशिष्ट्यञ्च विशेष्यतायाम् स्वाश्रयकर्तृनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्नप्रकारतानिरू-पितत्वस्वभिन्ननिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्नत्वाभ्याम् । व्यापारे प्राधान्यञ्च स्वभिन्नव्यापारनिष्ठविशेष्यतानिरूपितानुकूल-त्वसम्बन्धानवच्छिन्नप्रकारताशून्यत्वं, तेन दुहादेर्व्यापारद्वयवा-चकत्वपक्षे न दोषः । मनोरमाकारास्तु पक्त्वा भुज्यत इत्यादौ पचिभुजिभ्यां न युगपच्छाकान्वयः किन्त्वन्यतरेण शब्दोऽपरेणार्थः । तत्र प्रथमाद्वितीये व्यवस्थिते एव । तद्यथा पक्त्वा भुज्यते ओदनः किं पक्त्वा अर्थादोदनम्यदा तु ओदनं पक्त्वा भुज्यत इति प्रयुज्यते तदा भुज्यत इत्यत्र अर्थादोदन इति गम्यते । एवं विवक्षाभेदेन योजयितुं शक्यते हरिर्हरिं वेत्युभयं साध्विति वदन्ति ।

## ८—पद्दन्नित्यादिसूत्रविचारः

पं० श्रीसदानन्दझा, भागलपुर

प्रथमं पद्दन्नोमासहृन्निशसन्यूषन् दोषन्यकञ्छकन्नुदन्ना-सञ्छस्प्रभृतिषु इत्यादेशात्मकात्सूत्रात् पाद दन्त नासिका मास हृदय निशा असृज् यूष् दोष् यकृत् शकृत् उदक आस्य एतानि स्थानीनि कुतो लभ्यन्ते एतस्य समाधानं स्थान्यर्थाभिधान-

समर्था एकादेशा भवन्तीतिभाष्यस्यास्य वैशिष्ट्यविधया अर्थं विमृश्य प्रपञ्चितम्। तत्रातिव्याप्त्यव्याप्तिपरिहारश्चोपपादितः। ततः मांसप्रभृतिषु इत्यत्र प्रभृतिग्रहणस्य प्रकारार्थता निष्पादिता-साङ्कर्यञ्च सुप्त्वेनैव। न शब्दत्वेन। न वा प्रत्ययत्वेन इति साधितः। एतत्प्रसंग एव न लुमताङ्गस्येतस्य मांस्यन्या उखाया इति भाष्योदाहरणानानित्यता च साधिता। मांस्यचन्या इत्यस्य प्रकारान्तरेण साधुत्वशंका निरस्ता। अन्ते प्रभृतिग्रहणस्य प्रकारार्थता-नभ्युपगमेऽपि शब्दशक्तिस्वभावात् यादृशार्थः प्रभृतिशब्दादायाति तादृशार्थमात्राभ्युपगमेऽपि न काचिदापत्तिरितिसमूलं निष्पादितम्।

## ६—भाषाविज्ञानम्

श्री एकानन्दराजहस,

स्वीयमनोभावाभिव्यञ्जनार्थं स्पष्टोच्चारिता वाक् भाषापदेन व्यवह्रियते। यद्यपि भाषणं भाषेति व्युत्पत्त्या भाषाभाषणयोरभेदस्तथापि पूर्वपरम्परातो निर्माणपूर्विका स्थायिनी बृहच्छब्दकोशपदाभिधायिनी भाषा, मानवसमाजैः कृतभाषाव्यवहारस्य नाम भाषणम् इति विद्याकलयोर्यावान् भेदस्तावान् द्वयोर्भेद इति बोध्यम्। भाषाया विज्ञानमिति षष्ठ्या विषयित्वबोधनेन भाषाविषयकशास्त्रं भाषाविज्ञानेनोच्यते। 'विज्ञानं शिल्पशास्त्रयोः' इति कोशात्। परमेश्वरकृतिविषयकमानवकृतिविषयकविवेचकत्वेन क्रमशो विज्ञानकलयोः पार्थक्यमित्यवगन्तव्यम्। व्याकरणभाषाविज्ञानयोरेककार्यकारित्वात्तादात्म्यापत्तिश्शङ्का नाशङ्कनीया। व्याकरणस्य कलात्वात् भाषाविज्ञानस्य च विज्ञानविशेषत्वात्, प्रथमस्य साधुत्वासाधुत्वविवेचकत्वादपरस्य वैज्ञानिकव्याख्येयत्वादित्यादिना द्वयोर्भेद इति बोध्यम्। इदञ्च वर्णनात्मकव्याकरणविषयकम्। व्याख्यात्मकव्याकरणस्य भाषाविज्ञानस्य चैककार्यकारित्वाद्वर्णनात्मकव्याकरणसापेक्षत्वाच्च न तयोर्भेद इत्यप्यवगन्तव्यम्।

अत्र बहवो विवदन्ते—"भाषाविज्ञानम्पाश्चात्यविद्वद्भिरेवोपार्जितम्" तन्न विचारसहम्। ब्राह्मणग्रन्थेषु प्रातिशाख्ये च बहूनां शब्दानां वैज्ञानिकप्रक्रियामवलम्ब्य व्याख्यानदर्शनेन, भाषणम्, उच्चारणम्, अवबोधनम्, व्याख्यानम्, अर्थप्रकटनमित्याद्यर्थेषु निर्वचनशब्दस्य च तत्रावलोकनेन तत्रानीन्तनेऽपि तथाविधविवेचनायाः सत्त्वात्। विक्रमशतकात्पूर्वसप्तमशतके महर्षिणा

यास्केन भाषाविज्ञानापरपर्यायो निरुक्तनामकग्रन्थो व्यरचि। यत्र च भाषाया विभाषायाश्च ऐतिहासिकप्रक्रियान्तुलनात्मकप्रक्रियाञ्चावलम्ब्य व्याख्यानमस्ति।

विक्रमपूर्वपञ्चमशतके पाणिनिर्मुनिना ऐतिहासिकतुलनात्मकसामान्यव्याकरणरीतिञ्चावलम्ब्य सर्वत्र विशदरूपेण व्याख्यातम्। परिनिष्ठितशब्दमूलभूतधातुं प्रातिपदिकञ्चाश्रित्य शब्दनिष्पादनम्। वैज्ञानिकव्याख्यानमेव महर्षिपाणिनेः। लोके (अधुना) वेदे (पुरा) चेत्यादिप्रतिपादनद्वारा शब्दनिष्पादनरीतिरपि ऐतिहासिकी। दूराह्वाने प्रत्यभिवादे च प्लुतविधानप्रवृत्तिस्तदानीन्तनप्रचलितलोकोक्तिबोधक-दण्डादण्डिकेशाकेशि-इत्यादि शब्दनिष्पादने सूक्ष्मदृष्टिश्च लौकिकी। भाषाविज्ञानप्रधानाङ्गमूला सर्वतो वैशिष्ट्यबोधिकास्वरविषयकविवेचनापद्धतिस्तु वैज्ञानिक्येव। एवं विक्रमपूर्वचतुर्थशतके महर्षेः कात्यायनस्य वार्त्तिकव्याख्यानं देशकालादिपरिच्छिन्नमेव। महर्षिपाणिनिसमये हिमानी, अरण्यानीत्यनयोरासीत् स्त्रीत्वे प्रयोगः, परन्तु कात्यायनसमये महत्वे प्रयुज्यते स्म। एवं यवनानीत्यस्यं पूर्वं यवनस्त्रियामासीत् प्रयोगः, किन्तु वार्त्तिककारसमये उर्दूलिप्यां प्रयुज्यते स्म।

विक्रमपूर्वद्वितीयशतके महर्षिपतञ्जलिकृतव्याख्यात्मकमहाभाष्यन्तु भाषाविज्ञानाभिन्नमेव। महाभाष्ये प्रायशः सर्वत्र देशकालादिभेदेन ऐतिहासिकरीत्या तुलनात्मकरीत्या च शब्दानां व्याख्यानमतिमनोरञ्जकम्। "अस्त्यप्रयुक्त" इत्याद्यारभ्य ऊष, तेर, चक्र, पेचेत्यादीनां, हम्मति, रंहति, गच्छतीत्यादीनां च वैज्ञानिकविवेचनमेवात्र मानमवधार्यम्।

इदन्तु सत्यम्-पाश्चात्यविदुषां भाषाविज्ञानविषयकविवेचनापद्धतिर्भारतीयविद्वदपेक्षया भिन्नां रीतिमनुसरति, किन्त्वालोच्यविषयस्तु द्वयोरैक्यमाधत्ते। पाश्चात्यविदुषां भाषाविज्ञानविषयकविवेचनाबीजं त्वित्थमिहावगन्तव्यम्—

पुरा यूनानीविद्वांसो हिब्रूभाषामेव सर्वभाषाजननीमुररीकृत्योत्पत्तिव्युत्पत्तिविषये शब्दानां विवेचनं कृतवन्त आसन्। किन्तु 'लिबनिज' नाम्ना केनचिद्भाषावैज्ञानिकेन तन्मतं विखण्ड्य जगतः परस्परसम्बद्धभाषा च विभज्य सर्वभाषाजननी काचिदेकैवेति प्रस्तावः समुत्थापितः। १७६७तमख्रीष्टाब्दे 'कुरडो' नाम्ना केनचित् फ्रांसीयविदुषा संस्कृतलैटिन-भाषयोः परस्परसाम्यं प्रदर्शितम्। अनन्तरं 'सर विलियम जोन्स' महोदयेनाधुनिकरीत्या सूक्ष्मदृष्ट्या च संस्कृताध्ययनं विधाय भाषाविषये यत्सिद्धान्तितं

तत् योरोपीयविदुषां संस्कृताध्ययने महत्युत्कण्ठाविवर्द्धकम्। संस्कृते सर्वथाऽभिज्ञेन 'अलेक्जेण्डर हैमिल्टन'नाम्ना केनचिदङ्गरेजसैनिकेन जर्मनकविः 'श्लेगेल' महोदयः, फ्रांसीयविद्वांसश्च प्रौढरीत्या संस्कृतमध्याप्यन्त। प्रौढतामागतेन 'श्लेगेल' महोदयेन 'भारतीयानां भाषा, बुद्धिश्च' इति पुस्तकमलिख्यत। 'सर विलियम जोन्स'सिद्धान्तेन, विशेषतः पुस्तकेनानेन च योरोपीयेषु संस्कृतेनानिवार्यता लब्धा। याऽधुनाऽपि जर्मनशिक्षापद्धतौ वर्द्धमानैवावलोक्यते। अनन्तरं 'हेनरी टामस' 'कोलब्रुक' 'विलसन' प्रभृतिभिरनेकपाश्चात्यविद्वद्भिर्बहूनां संस्कृतग्रन्थानामनुवादो विहितः। तेषामेव मध्ये आधुनिकभाषाविज्ञानजन्मदात्रा 'फ्रैन्ज बॉप' महोदयेन संस्कृत-जैन्द-यूनानी-लैटिन-ट्यूटाइनिक-लिथुआनियन-स्लेवानियन-केल्टिकभाषाणां परस्परसम्बन्धस्थापना कृता। जर्मनस्य 'फ्रैश्च बॉप' 'जेबकृग्रिम' महोदयौ, 'डनेमार्क'स्य 'रैसमस राक्स' महोदयश्च आधुनिकभाषाविज्ञानजन्मदातारो मन्यन्तेऽधुना। १८७५ खृष्टाब्दानन्तरं भाषाविज्ञानस्येतिहासस्याधुनिकयुगारम्भो भवति।

अत्र भाषोत्पत्तिविषयेऽधुना बहवो वादाः प्रचलिता वर्त्तन्ते। यथा अनुकरणमूलकतावादः, मनोभावाभिव्यञ्जनावादः, हे हो वादः। डिंगड्रंगवादप्रभृतयः। परन्तु 'स्वीट' महोदयेन पूर्वोक्तान् सर्वान् वादान् विखण्ड्य तेषु तेषु चांशिकसत्यमङ्गीकृत्य समन्वितविकासवादरूपम् 'हिष्ट्री ऑफ लैंग्वेज' एवं 'न्यू इंगलिश' ग्रामरे पुस्तके च स्थिरीकृतम्।

# शब्दखण्डविभागः

## १—शब्दनित्यत्ववादः

पं० श्रीबुद्धिनाथझा, गंगौली, दरभंगा

वैयाकरणमते नित्यत्वपरिष्कारः।, अनित्यत्वलक्षणम्। प्रत्यभिज्ञायाः नित्यत्वासाधकम्। कत्वजातिसिद्धिः। उच्चारणलक्षणम्। नैयायिकमते पदप्रत्यक्षोपपादनम्। श्रुत्याऽनित्यत्वसाधनम्। लाघवान्नित्यत्वसाधनम्। सर्वदा पदश्रवणवारणम्। इको यणचीत्यनुशासनविरोधपरीहारः। अव्यवहितपूर्वत्वपरिष्कारः। प्रागभावसाधनम्। कार्यकारणभावप्रदर्शनम्। शब्दानित्यत्वानुमानम्। उपाधिप्रदर्शनम्। सत्प्रतिपक्षप्रदर्शनञ्च। नित्यत्वसाधनखण्डनम्। वेदकर्तृत्वविचारः। मीमांसकमते ईश्वरानङ्गीकारविचारः। तत्खण्डनञ्च। भट्टमतेऽपीश्वरास्तित्वप्रदर्शनम् 'एकं पद'मित्यत्र एकत्वविचारः। आनुपूर्वीविचारः।

---

## २—शब्दविचारः

प० श्रीजयमाधवठाकुर, करमौली, दरभंगा

किमपि कर्म विना शब्दं न सिद्ध्यति। कर्मेन्द्रियेषु वागिन्द्रियं प्रधानम्। वाचश्च बहुविधा भवन्ति। ता एव भाषाः तासु काचित् संस्कृतभाषा सा च शब्दमयी अन्या अपशब्दमयी। शब्दश्च त्रिविधवृत्तिभिर्बोधकः। स च शब्दः स्फोटः। अष्टावपि स्फोटास्तत्तद्रूपेण भासन्ते। तत्राखण्डवाक्यस्फोटजातिस्फोटौ मुख्यौ। सर्वेषामपि शब्दानां मूलभूताः पराख्याप्रभृतयस्तिस्रो वाचो विलसन्ति ततः परं नादः शब्दप्रकाशकः। नादशिवयोरभेदः। ध्वनिश्च शब्दाभिव्यक्तौ हेतुः। शब्दः शब्दशास्त्रादिभिर्व्युत्पादितः। शब्दा एव अपशब्दतां प्रयान्ति। शब्दापशब्दयोर्वाचकतायां तुल्यत्वेऽपि शब्दानामेव धर्मजनकत्वम्। शब्दो ब्रह्म यथा ब्रह्मणो नित्यत्वम् तथैव शब्दस्यापि। शास्त्रं तु ज्ञानजनकम्। ज्ञानाच्छुद्धिर्मोक्षश्च। शब्दोपासना ब्रह्मत्वप्रापिका। शब्दमयी संस्कृतभाषा तदुद्भूतं भाषान्तरम्।

## ३—शब्दतत्त्वम्

पं० श्रीदिवाकान्तझा, मानिक चौक, मुज़फ्फरपुर

आध्यात्मिकाधिदैविकाधिभौतिकदुःखत्रयैस्सन्तप्यमानाना - अभिमतां तत्त्वतो ब्रह्मज्ञानमेवैकं शरणम्। तत्रानादिनिधनं शब्दतत्त्वम्ब्रह्मैव जगतः प्रक्रियानिर्वाहायार्थरूपेण विवर्तते। एवं सजातीयविजातीयस्वगतभेदशून्यं प्रक्रियाभेदैर्बहुधाभिन्नमेकमप्यखण्डस्फोटात्मक शब्दतत्त्वम्ब्रह्म व्याकरणज्ञानेन सम्यगधिगम्यते। तस्मान्नित्यनिरतिशयानन्दाप्तये सम्यग्व्याकरणज्ञानमावश्यकमित्यलम्।

---

## ४—व्यापारमुख्यविशेष्यकबोध एव समीचीनः

प० श्रीविश्वेश्वरझा

प्रथमान्तार्थमुख्यविशेष्यकबोधं निराकृत्य व्यापारविशेष्यकबोध एव समीचीन इति प्रदर्शितं संक्षेपेणेति।

---

## ५—शब्दानां नित्यत्वानित्यत्वविचार.

प० श्रीदयानाथझा, महुआर, दरभगा

तत्र शब्दविषये केचन क्षणिक वासनया शब्दस्वरूपम्विपरिवर्त्तमानं ज्ञानस्वरूपमसत्त्वरूपम्वेत्याहुः। अपरे च पुनः पुद्गलाख्यावयवारब्धन्तत्प्रतिपादयन्ति। भाष्यकारादयस्तु नित्यमपि तन्न वर्णात्मकङ्किन्तु गोशब्दोच्चारणानन्तरमन्तर्मनसि प्रकाशमानमनवयवङ्किन्तु किमपि स्फुटत्यर्थोऽस्मादितिव्युत्पत्त्या स्फोटपदाभिधेयमनादिनिधनम्ब्रह्मेति श्लोकप्रतिपादितम्ब्रह्मस्वरूपं सृष्टिमूलम्प्रतिजानीते।

---

## ६—अभेदान्वयबोधश्च विरूपोपस्थितयोरेवेतिव्युत्पत्तिः

प० श्रीताराकान्तझा, भोरी, गया

उपस्थितीयविषयता शाब्दबोधीयाभेदत्वावच्छिन्नसांसर्गिकविषयतात्वव्यापिका भवतीति निरुक्तवाक्यतात्पर्य्यम्। यद्वाभेदसम्बन्धेनान्वयबोधो विरूपोपस्थितपदप्रयोज्य एवेति तदर्थः। तत्र चाभेदसम्बन्धो भेदत्वविशिष्टान्यस्वरूपसम्बन्धावच्छिन्नाधेयतावत्सम्बन्ध-

रूपो बोध्यः। व्युत्पत्तिफलश्च घटो घट इत्यादौ शाब्दापत्तिवारणमेव। ननु मृच्चक्रसलिलकुलालादिसमवधानेऽपि दण्डाभावाद्घटाभावः सर्वानुभवगोचरः। कार्य्यकारणभावस्वीकार आवश्यकः। स चान्वयव्यतिरेकग्राह्य एव। ततश्च नीलो घट इत्यादौ समानविभक्तिकपदादीनामभेदान्वयकारणत्वमन्वयव्यतिरेकसिद्धमिति घटो घट इत्यादौ स्थलेऽपि तादृशकारणसमवधाने कुतो नाभेदान्वयापत्तिः सामग्र्या कार्य्यजनने निरुक्तव्युत्पत्तिरूपबाधकस्याकिंचित्करत्वादिति चेन्न घटप्रकारकाभेदसंसर्गकघटविशेष्यकान्वयबोधस्यापादनीयत्वेनाभिमतस्याप्रसिद्ध्यैव। घटो घट इत्यत्रासम्भवात्। घटो नीलघट इत्यादौ तादृशान्वयबोधस्य प्रसिद्धावपि तत्रत्य सामग्र्याः प्रकृते विरहेणापत्तेरसम्भवः सूपपाद एव।

ननु द्रव्यं घट इत्यादौ द्रव्यत्वादौ धर्मितावच्छेदकतासम्बन्धेन प्रसिद्धस्य शुद्धघटत्वावच्छिन्नाभेदान्वयबोधस्य तत्रत्यसामग्र्यैव घटो घट इत्यत्र घटत्वादावापत्तिसम्भवः। यदि तु तत्रत्यायाः सामग्र्या द्रव्यत्वावच्छिन्नोपस्थितिघटितायाः प्रकृते न सम्भव इत्युच्यते तदा धर्मितावच्छेदकनिष्ठप्रत्यासत्त्या योग्यताज्ञानस्य शाब्दबोधे हेतुतां स्वीकृत्यातिप्रसङ्गः सुलभः, अत्रकल्पे लाघवं तथाऽप्रामाण्यग्रहस्यानुगतरूपेणोत्तेजकत्वमाकाङ्क्षाज्ञानस्य सहकारित्वम्।

अत्रोच्यते तद्धर्मत्वावच्छिन्नाभेदसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति तद्धर्मभेदत्वेन हेतुताऽन्वयव्यतिरेकमहिम्ना स्वीक्रियते इति घटो घट इत्यादिस्थले घटत्वे धर्मितावच्छेदकतासम्बन्धेन घटत्वावच्छिन्नाभेदसम्बन्धावच्छिन्नप्रकारकताकशाब्दबोधस्यापत्तिविरहात् एतत्कार्य्यकारणभावमूलिकैव च निरुक्तव्युत्पत्तिः। एतादृशकार्य्यकारणभावाङ्गीकारेऽपि घटो नीलघटः, नीलघटो नीलघटः, इत्यादौ दोषवारणं न सम्भवतीति विशेष्यतात्वसम्बन्धेन शाब्दं प्रति प्रकारतावदन्यत्वेन हेतुता स्वीकार्य्या।

नन्वेवमपि राज्ञो राजेत्यादौ राजत्वावच्छिन्ने स्वत्वसम्बन्धेन राजत्वावच्छिन्नस्यान्वयबोधो न स्यात् विशेष्यतात्वसम्बन्धेनास्य शाब्दबोधस्य सत्त्वेन राजत्वावच्छिन्नप्रकारतावदन्यत्वविरहादिति चेन्न, अभेदसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतात्वसम्बन्धस्य कार्य्यतावच्छेदकसम्बन्धत्वाङ्गीकारेणादोषात्।

न च प्रकारतायां सम्बन्धावच्छिन्नत्वे मानाभावेन तत्राभेदसम्बन्धावच्छिन्नत्वं निवेश्योक्तकार्य्यकारणभावकल्पनं न युक्तमिति वाच्यम्। संयोगेनावृत्तिर्घट इति बुद्धिं प्रति संयोगेन घटवद्-

भूतलं संयोगेन घटवान् पर्वत इत्यादि नानाविशेष्यकघटप्रकारकनिश्चयस्य प्रतिबन्धकत्वमस्तीति तेषामेकरूपेण प्रतिबन्धकत्वनिर्वाहाय तत्स्वीकारस्यावश्यकत्वात्।

यदि तु निरुक्तरीत्या कारणतामङ्गीकृत्य निरुक्तापत्तिवारणं न युक्तिसहम्, आत्मनिष्ठप्रत्यासत्त्या विषयनिष्ठप्रत्यासत्त्या च कार्य्यकारणभावस्यैव शास्त्रकारशैलीसिद्धत्वेन विषयतानिष्ठप्रत्यासत्त्या कार्य्यकारणभावकल्पनस्य महामुनेर्विश्वामित्रस्य महामुनेर्व्यासस्य चापरसृष्टिकल्पनस्येव प्रौढ्या निष्पादनीयत्वादित्युच्यते तदा घटो घट इत्यादौ घटत्वावच्छिन्नाभेदसम्बन्धावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताकस्य शाब्दबोधस्य वारणाय निरवच्छिन्नघटत्वमात्रावच्छिन्नप्रकारतानिरूपितविशेष्यतानिरूपितनिरवच्छिन्नावच्छेदकतासम्बन्धेन शाब्दबोधत्वावच्छिन्नं प्रति घटत्वभेदः कारणमिति विशिष्यैव कार्य्यकारणभावो वक्तव्यः।

नीलघटो नीलघट इत्यादावापत्तिवारणाय च निरवच्छिन्नघटत्वनिष्ठावच्छेदकतानिरूपितनीलत्वावच्छिन्नाभेदसम्बन्धावच्छिन्नप्रकारतानिरूपितनीलत्वावच्छिन्नविशेष्यतानिरूपितनिरवच्छिन्नावच्छेदकतासम्बन्धेन शाब्दं प्रति घटत्वभेदत्वेन पृथक् कारणत्वं स्वीकार्य्यम्। वस्तुतस्तु तद्धर्मान्यवृत्तिविषयतासम्बन्धेन ज्ञानत्वावच्छिन्नं प्रति तद्धर्मभेदत्वकारणतैव लाघवात् कल्पनीया। तथा च निरुक्ततत्तत्सम्बन्धेन शाब्दबोधं प्रति घटत्वाद्यन्यवृत्तिविषयतासम्बन्धेन ज्ञानत्वावच्छिन्नस्य व्यापकतया घटत्वादौ तादृशविषयतासम्बन्धेन ज्ञानत्वावच्छिन्नोत्पादकसामग्रीविरहेण न तत्र निरुक्ततत्तत्सम्बन्धेन शाब्दापत्तिः। अत्र कल्पे पूर्वकल्पापेक्षया लाघवम्।

## ७—शक्तिविवेकः

प० श्रीकेदारनाथमिश्र, सलमपुर, कौठिया, भागलपुर

अग्रहीतवृत्तिकपदात् पदार्थोपस्थितेः शाब्दबोधस्य चादर्शनेन तद्धर्मावच्छिन्नविषयकशाब्दबुद्धित्वावच्छिन्नं प्रति तद्धर्मावच्छिन्नार्थनिरूपितवृत्तिविशिष्टज्ञानस्य कारणतेत्यत्र वृत्तेः शक्तिलक्षणाभेदेन द्वैविध्येन तत्राद्यशक्तेरिदं पदमिममर्थं बोधयत्वित्याकारकपदविशेष्यकेच्छात्मकत्वम् अस्मात् शब्दात् अयमर्थो बोद्धव्य इत्यर्थविशेष्यकेच्छात्मकत्वं वा विनिगमनाविरहात् स्वीकार्यम्। तत्राद्येश्वरेच्छीयवाक्यात् एतदर्थनिष्ठविषयतानिरूपकबोधनिष्ठजन्यता-

निरूपितजनकतानिरूपिताश्रयतावत्पदमिति बोधः। द्वितीयवाक्यात्तु एतच्छब्दजनकतानिरूपितजन्यतावद्बोधनिरूपितविषयताश्रयोऽर्थः इति बोधः। एवं विचारयन्तो घटादिपदानां पदार्थतावच्छेदकीभूत-घटत्वादिविशिष्टे ईश्वरेच्छारूपां शक्तिं मन्यमानाः घटत्वादिरूप-तद्धर्मतद्वैशिष्ट्य - तदाश्रयेषु घटादिपदवाच्यतामुपपादयन्ति तार्किकाः। उपपादनक्रमस्तु तत्पदवाच्यत्वम् तत्पदजन्यबोधीया येश्वरेच्छा निरूपिता तद्विशिष्टत्वम् वैशिष्ट्यं च आश्रयत्व-सम्बन्धावच्छिन्नस्वनिष्ठप्रकारतानिरूपित - विशेष्यतावत्व,स्वनिष्ठा-वच्छेद्यतानिरूपितसमवायसम्बन्धावच्छिन्नावच्छेदकतावत्वसम्ब - न्धावच्छिन्नस्वनिष्ठप्रकारतानिरूपितविशेष्यतावत्व,स्वनिष्ठप्रकार - तावच्छेदकसंसर्गघटकसमवायसम्बन्धावच्छिन्नावच्छेदकतानिष्ठा - वच्छेद्यतानिरूपितावच्छेदकतावत्वैतदन्यतमसम्बन्धेन। प्रथम-सम्बन्धदानेन घटस्य द्वितीयसम्बन्धेन घटत्वस्य तृतीयसम्बन्धेन समवायस्येति विवेको न्यायशास्त्रस्य। अत्र शाब्दिकाः - चक्षुरादी-न्द्रियाणां घटादिषु तदीयचाक्षुषादिकारणतायाः अनादित्ववच्छब्दा-नामप्यर्थे सहार्थबोधकारणता अनादि सैव शक्तिरित्यङ्गीकुर्वन्ति। घटादिपदे अगृहीतशक्तिकस्य प्रत्यक्षाद्युपस्थितघटादिपदाच्छाब्द-बोधानुदयेनोपस्थितरूपकारणसत्वे शाब्दबोधरूपकार्याभावरूपा-न्वयव्यभिचारेण प्रत्यक्षाद्युपस्थितेः शाब्दबोधाजनकत्वेन तदर्थ-विषयकशाब्दबोधं प्रति तत्पदनिष्ठशक्तिज्ञानजन्योपस्थितेः तत्पद-निष्ठलक्षणाज्ञानजन्योपस्थितेश्च हेतुत्वेन कार्यकारणभावद्वयकल्पने न्यायमतेऽधिकं अस्माकम्मते तदर्थविषयकशाब्दबोधं प्रति एकेनैव शक्तिज्ञान्यजन्योपस्थितित्वेन हेतुतेति लाघवम्। एवं लक्षणावृत्तिस्वीकारे लक्षणाज्ञानजन्योपस्थितिं विनाऽपि तीर-पदनिष्ठशक्तिज्ञानजन्योपस्थितितो भवति शाब्दबोधः। एवं तीरपदनिष्ठशक्तिज्ञानजन्योपस्थितिं विनाऽपि गङ्गापदनिष्ठलक्षणा-ज्ञानजन्योपस्थितितो भवति तीरविषयको बोध इति प्राप्तव्यतिरेक-व्यभिचारवारणाय तत्पदनिष्ठशक्तिज्ञानजन्योपस्थित्यव्यवहितोत्तर-जायमानतदर्थविषयकशाब्दबुद्धित्वावच्छिन्नं प्रति तत्पदनिष्ठशक्ति-ज्ञानजन्योपस्थितिः कारणम्। एवं तत्पदनिष्ठलक्षणाज्ञानजन्यो-पस्थित्यव्यवहितोत्तरजायमानतदर्थविषयकशाब्दबुद्धित्वावच्छिन्नं प्रति तत्पदनिष्ठलक्षणाज्ञानजन्योपस्थितिः कारणमिति कार्यकारण-भावकल्पने स्वध्वंसाधिकरणक्षणानुत्पत्तिकत्वविशिष्टस्वाधिकरण-क्षणध्वंसाधिकरणक्षणोत्पत्तिकत्वरूपाव्यवहितोत्तरत्वघटकस्वत्वस्य तत्तद्व्यक्तिविश्रान्तत्वेनाननुगततया अनन्तकार्यकारणभावप्रसङ्गः। न च पूर्वोक्तकार्यकारणभावे चैत्रीयशक्तिज्ञानजन्योपस्थित्यनन्तरं

मैत्रीयशाब्दबोधस्यापि तादृशोपस्थित्यव्यवहितोत्तरत्वेन कार्यताक्रान्तत्वेन तदुपस्थित्यभावेन व्यतिरेकव्यभिचार इति वाच्यम् समवायघटितसामानाधिकरण्यविशिष्टाव्यवहितोत्तरत्वसम्बन्धेन तत्पदनिष्ठशक्तिज्ञानजन्योपस्थितिविशिष्टतदर्थविषयकशाब्दबुद्धित्वावच्छिन्नम्प्रति तत्पदनिष्ठशक्तिज्ञानजन्योपस्थितिः कारणम् । एवं उक्तसम्बन्धेन लक्षणाज्ञानजन्योपस्थितिविशिष्टतदर्थविषयकशाब्दबुद्धित्वावच्छिन्नं प्रति तत्पदनिष्ठलक्षणाज्ञानजन्योपस्थितिः कारणम् इति कार्यकारणभावाङ्गीकारेण मैत्रीयशाब्दबोधस्य चैत्रीयोपस्थित्यसमानाधिकरणत्वेन कार्यतावच्छेदकानाक्रान्तत्वेन व्यभिचाराभावात् । विषयनिष्ठप्रत्यासत्त्या शाब्दबोधादिकमादाय व्यभिचारवारणाय सम्बन्धांशे समवायघटितत्वनिवेशनं बोध्यम् । अपभ्रंशे शक्तिमनङ्गीकृत्य साधुशब्दस्मरणद्वारा अपभ्रंशशब्दाद्बोध इति तार्किकास्तन्न शोभनम् । साधुशब्दाज्ञानवतां पामराणां ततो बोधानापत्तेः । वैयाकरणैस्तु अपभ्रंशेऽपि बोधकताशक्तिरङ्गीक्रियते । सत्येवं तस्यापि साधुता स्यादिति न मन्तव्यम् शक्तिस्वीकारमात्रेण साधुता न भवति किन्तु साधुशब्दप्रयोगे पुण्यं असाधुशब्दप्रयोगेण पापं भवतीति विशेषादिति ।

## १८—स्फोटवादः

प० श्रीमणिनाथझा, भागलपुरम्

स्फोटजिज्ञासा । जिज्ञासायाः प्रयोजनाऽभिधानम् । स्फोटजिज्ञासाया असम्भवप्रदर्शनपुरस्सरं तदुपपादनम् । जिज्ञासितस्य स्फोटस्य स्वरूपाऽभिधानम् । वर्णानां वाचकत्वाभावं प्रदर्श्य स्फोटस्य वाचकत्वोपपादनम् । स्फोटस्यासत्तामशङ्क्यानुभवप्रमाणेन वर्णातिरिक्तस्फोटसंज्ञाऽभिधानम् । स्फोटानङ्गीकर्तृ तार्किकस्योपपादन पुरस्सरं निराकरणम् । नादानां व्यस्तसमस्तप्रकारद्वयेन स्फोटाभिव्यञ्जकत्वासम्भवमाशङ्क्य प्रत्येकं नादानां व्यञ्जकत्वाङ्गीकारेण स्फोटज्ञानोपपादनम् । वर्णाः स्फोटाभिव्यञ्जका इति वादिभिः कैश्चित् शाब्दिकैः सह स्वाविरोधप्रतिपादनम् ।। स्फोटानङ्गीकर्तृ मीमांसकमतमुपपाद्य निराकरणम् । मीमांसकैकदेशिमतमुपपाद्य पदवाक्ययोरखण्डताप्रदर्शनेन निराकरणम् । पदवाक्ययोरणुतायां मानाभिधानम् । स्फोटस्य ब्रह्मरूपतां प्रदर्श्य तस्माज्जगत आविर्भाव प्रदर्शनम् । स्फोटात्मकशब्दब्रह्म एव जगदाकारेण विवर्त्तते स्फोटस्य शब्दात्मकत्वे तदनित्यत्वेन स्फोटानित्यत्वशङ्कां प्रदर्श्य शब्द

स्य नित्यत्वाङ्गीकारेण निराकरणम् । शब्दानित्यत्ववादिनां बहूनां मतमुपपादननिराकरणम् । शब्दानित्यत्ववादिनामहितानां मतमुपपाद्य निराकाणम् वैशेषिकमतमुपपादय निराकरणम् । पाश्चात्यवैज्ञानककर्तृकाविष्कारान् शब्दनित्यतायां व्यापकतायाश्च प्रमाणत्वेन दर्शयन् तत् जरन्नैयायिकानां शब्दानित्यत्वयुक्तिं समीक्षितुं सुधीजनं प्रतिनिजाभ्यर्थना । व्यावहारिकदशायां स्फोटस्य प्रथमतः त्रैविध्यप्रतिपादनम् । वाक्यस्फोटस्य मुख्यतां दर्शयन् वैयाकरणाभिमताष्टविधस्फोटानां संक्षेपेण निरूपणम् । पदवाक्ययोरखण्डत्वे शास्त्रस्यानर्थक्यलक्षणाप्रामाण्यशङ्कानिरासः । जातिस्फोटाङ्गीकारेण ब्रह्मणः स्फोटतत्त्वाभिधानम् ।

# शब्दखण्डः

## १—पर्युदासकत्वनिर्णयः

श्री के० एस्० वी० शास्त्री, पूना

समासघटकनञः पर्युदासप्रसज्यप्रतिषेधयोः अर्थयोः गौरवलाघवविचारपूर्वकं पर्युदासार्थकत्वनिर्णयः पर्युदासार्थकत्वे भेदप्रतीतेरुपपत्तिं प्रदर्श्य समासे असमासेऽपि उदाहरणप्रदर्शनपूर्वकं सयुक्तिकं सप्रमाणं प्रयोगांश्च अनुसृत्य आरोपार्थकत्वं अभावर्थकत्वं तत्रापि प्रागभावप्रध्वंसाभावान्योन्याभात्यन्ताभावाद्यर्थकत्वं विचार्य आरोपार्थकत्वेनसकलेष्टसिद्धौ तदर्थकत्वव्यवस्थापनम्। यद्यपि, अभावो वा तदर्थोऽस्तु भाष्यस्य हि तदाशयादिति वर्तते तदपि पक्षान्तरत्वेन नेयमिति।

---

## २—शब्दस्य नित्यता

प० श्रीशोभानन्दझा

शब्द एव सकलशास्त्रविचारप्रवन्धे लोकव्यवहारे च कारणम्, नानुमानादिकम्। अतो भगवता गौतमेन शब्दरूपं स्वतन्त्रप्रमाण व्यवस्थापितम्। तत्र केचन क्षणिकं वासनयाशब्दस्वरूपं विपरिवर्त्तमानं ज्ञानस्वरूपमसत्स्वरुपम्वा वैभाषिकप्रभृतयो बौद्धाः। जैनाश्च पुद्गलाख्याऽवयवारब्धं तत्प्रतिपादयन्ति। नैयायिकवैशेषिकाश्च तृतीयक्षणवृत्तिध्वंसप्रतियोगिनमाकाशस्य गुणविशेषं वर्णयन्ति। प्राभाकरास्तु नित्यमपि तत्,आकाशानुमापकं तद्गुणभूतं प्रतिपादयन्ति। भाट्टास्तु नित्यं व्यापकं वर्णरूपं ध्वनिव्यङ्ग्यं तदभ्युपेयन्ति। जरद्वैयाकरणास्तु शिक्षाकारादयो वायुगुणभूतं तदाख्यापयन्ति। वैयाकरणास्तु नित्यं निरवयवं ब्रह्मस्वरूपं स्फोटं तत्प्रतिपादयन्ति। इत्थं हि तेषां विचारसरणिः। तथाहि—पूर्वपूर्ववर्णानुभवजन्यसंस्कारसहकृताऽन्त्यवर्णानुभवस्य शाब्दबोधोत्पादकत्वे येनाक्रमेणानुभवस्तेन क्रमेण संस्कारस्थितिरित्यत्र प्रमाणाभावात्सरो नदी रसो दीन जराराज इत्यादौ विपरीतसंस्कारोद्बोधेन प्रत्येकमन्यार्थप्रत्ययापत्तेः। नाप्यव्यवहितोत्तरत्वसम्बन्धेन पूर्वपूर्ववर्णवत्वमुत्तरोत्तरवर्णे संस्कार बशेन ग्रहणात्पदस्य प्रत्यक्षतया शाब्दबोधोपपत्ति सम्भवतीतियुक्तम्। नष्टविद्यमानयोरयं पूर्वोऽयं पर इत्यभिलापा

सम्भवेन अव्यवहितोत्तरत्वसम्बन्धस्य वक्तुमशक्यतया शाब्द-बोधानुपपत्तेः । न च शाब्दबोधस्यन्यथाऽनुपपत्त्या पूर्ववर्णजाः शब्दाः शब्दजशब्दन्यायेन चरमवर्णप्रत्यक्षपर्य्यन्तं जायमाना एव सन्तीति कल्पनीयमिति वाच्यम्। एवमपि पदस्याविद्यमानत्वेन तत्र शक्याश्रयत्वग्रहाऽसम्भवेन शाब्दबोधानुपपत्तेः। तथा च शाब्द-बोधास्यान्यथाऽनुपपत्या नित्यो निरवयवो ब्रह्मस्वरूपः स्फोटः शब्दः स्वीकार्यः। एवं हि शाब्दबोधोपपत्तये स्फोटाऽभ्युपगमस्याव-श्यकतयो तेषामनित्यत्वकल्पनायामनन्ततत्प्रागभावध्वंसादिकल्पना-प्रसङ्गेन गौरवम्, शाब्दबोधाऽनुपपत्तितादवस्थ्यञ्चेति लाघवाच्छ-ब्दानांनित्यत्वमेव युक्तम् । न चोत्पन्नोगकारो विनष्टोकार इति विश्वजनीन व्यवहाराकदेव शब्दस्यानित्यतत्वं भविष्यतीतिवाच्यम्। उत्पत्ति विनाशयोरपि व्यञ्जकध्वनिधर्म्मत्वाऽभ्युपगमात् । अत एव सोऽयं गकार इति प्रत्यभिज्ञशब्दानां नित्यत्वबोधिकोत्पद्यते । तस्याऽनित्यत्वेतु गकारे तद्व्यक्तित्वाभावत्सोऽयमित्येवरूपेण प्रत्य-भिज्ञा न स्यात्। न चेय प्रत्यभिज्ञा तदेवेदं भवतः कार्षापणमितिव-त्सजातीयविषयकतेति न तया नित्यत्वं कल्पयितुं शक्यते इति वा-च्यम् प्रमाणं विनापि प्रत्यभिज्ञायाः सजातीयविषयकत्वाऽभ्युपगमे सर्वत्रेव प्रत्यभिज्ञायाः सजातीयविषयकत्वापत्तौ तस्या अभेदाऽध्य-वसायकत्वानापत्तेः। किञ्च सोऽयंगकार इति प्रत्यक्षम्, प्रत्यग्रस-जातीय इत्यनुमानम्। न हि प्रत्यक्षविरुद्धमनुमानं कार्य्यं स्वकार्य्य-साधनाय प्रभवति। तथा च कार्य्यभावव्यवहारविजातीयव्यवहारस्य शब्दे दर्शनेन कार्य्यभाववैजात्यस्य नित्यत्वस्य शब्देऽनुमित्या निर्णयः सम्भवति। न चेको यणचीत्यादिना शब्दस्य प्रकृतिविकृतिभावोप-पादनान्मृद्घटवदनित्यत्वं दुर्वारमिति वाच्यम्। इग्घटितबुद्धिप्रसङ्गे यणघटितबुद्धिः कर्त्तव्येति बुद्धिविपरिणामोपपादकत्वेन तस्यानित्य-त्वाभावात्। किञ्च दशकृत्वः गोशब्दोच्चारणे दशकृत्वो गोशब्द उच्चा-रित इत्येव वदति लोके, न तु दशगोशब्दा उच्चारिता इति। शब्दा-नामनित्यत्वे तु दशगोशब्दाः उच्चारिता इत्येव वदेत्।

अत एव पतञ्जलिना 'कस्तर्हि शब्दः' इत्यनेन स्फोटमभिलक्षितम्। नन्वेतद्भाष्यं स्फोटपरमित्यत्र किम्प्रमाणमिति चेत्कैयटेनाप्यत्र वैयाकरणाः "वर्णव्यतिरिक्तस्ये" हि नैतद्भाष्यं स्फोटपरमेवोपपादि-तम्। तत्रत्योद्योते नागेशेनापि तथैव स्पष्टीकृतमित्यलम्बहुनेति शम्।

## ३—शक्त्याश्रयशब्दविमर्शः

प० श्रीशोभाकान्त झा, बम्बई

श्रावणप्रत्यक्षविषयतापन्नैरपि कैश्चिदगृहीतशक्तिकशब्दैः शाब्दबोधाननुभवात्तैरेव गृहीतशक्तिकशब्दैः श्रावणप्रत्यक्षविषयतापन्नैः शाब्दानुभवाच्चान्वयव्यतिरेकबललब्धस्य "तत्तत्सम्बन्धावच्छिन्नतत्तद्धर्मनिष्ठप्रकारतानिरूपितविशेष्यताशालिशाब्दबुद्धित्वावच्छिन्नं प्रति तत्वात्सम्बन्धेन तद्धर्मावच्छिन्ननिरूपितवृत्तिविशिष्टज्ञानं हेतुः वृत्तिवैशिष्ट्यञ्च स्वविषयकोद्बुद्धसंस्कारसामानाधिकरण्य-स्वाश्रयपदविषयकत्वोभयसम्बन्धेनेत्याकारककार्यकारणभावस्यावश्यं मन्तव्या तत्कुक्षिनिविष्टतत्संसर्गकतद्धर्मावच्छिन्ननिरूपितवृत्त्याश्रयत्वस्य यौगपद्येनानवस्थिते वर्णकदम्बके तदतिरिक्तं वा पदेऽसम्भवेन कथं तादृशकार्यकारणभावबलेनागृहीतवृत्तिकपुरुषादेः शाब्दानन्दसन्दोहो निवार्येत ?

तथाहि नैयायिकदिशा सर्वेषामपि ध्वनिवर्णात्मकशब्दानां प्रथमक्षणे समुत्पादस्यानन्तरद्वितीयक्षणे समवस्थानस्य तृतीयक्षणे विलयस्य सिद्धान्तितत्त्वेन पूर्वपूर्ववर्णानामुत्तरोत्तरवर्णविनाश्यतयाचरमस्य चोपान्त्यविनाश्यतया साहित्यावच्छिन्नवर्णकदम्बकस्यानुपलम्भात् कथंकारंतशक्तिग्रहः सम्भवेत् ? एकस्मिन् वर्णे तद्ग्रहाऽऽग्रहेत्वपरवर्णोच्चारवैयर्थ्यापत्तेः ।

अतः पूर्वपूर्ववर्णोत्तरचरमवर्णे एव शक्त्याश्रयत्वं विनिर्णीय पूर्वपूर्ववर्णानुभवजन्यसंस्कारसहकृतचरमवर्णानुभवेन तावदवर्णरूपपदविषयकस्मरणमुपपाद्य ततः पदार्थोपस्थितिं विधाय च नियतार्थविषयकशाब्दबोधेन सन्तप्रमानयम्प्रसादनीयम् ।

अथवा चरमवर्णानुभवपर्यन्तं पूर्वपूर्ववर्णेभ्यस्तत्सजातीयापरापरवर्णानां शब्दन्यायेन कदम्बमुकुलात्मकेन वीचीतरङ्गात्मकेन वा जायमानतया चरमवर्णानुभवकाले तावद्वर्णकदम्बकात्मपदविषयकश्रावणस्याक्षततया तावद्वर्णकदम्बकात्मपदनिष्ठतत्तदर्थनिरूपितशक्तिग्रहसमनन्तरं पदार्थोपस्थित्या जायमानयाशाब्दबोधस्य तदर्थविषयकस्य सम्भवः ।

किन्तु सूक्ष्मेक्षिकया समीक्षणे तु तन्मतमत्यन्तमसङ्गतम्प्रतिभाति यतः पूर्वपूर्ववर्णानां विनाशे तत्तदव्यवहितोत्तरत्वस्य चरमवर्णेऽसम्भवेन पूर्वपूर्ववर्णाव्यवहितोत्तरत्वविशिष्टचरमवर्णेऽर्थनिरूपितशक्तिग्रहासम्भवात् । क्वचिदपि विनष्टविद्यमानयोरन्योन्यपौर्वापर्यव्यवहारस्यादृष्टचरत्वाच्च

एवं शब्दजशब्दन्यायेन चरमवर्णानुभवपर्यन्तं पूर्वपूर्ववर्णानुत्पाद्य तावद्वर्णकदम्बरूपपदप्रत्यक्षोपपादनसम्भवेऽपि साहित्यावच्छिन्नक्रमशालिवर्णकदम्बवृत्त्यानुपूर्व्यवच्छिन्नपदस्यासत्त्वेन शक्तिग्रहासम्भवस्तदवस्थ एव। किञ्च पूर्वपूर्ववर्णधारोत्पादनियामकस्याभावाच्चरमवर्णानुभवोत्तरकालमपि पूर्वपूर्ववर्णोत्पादः कुतो नेति प्रश्ने मूकतैव शरणं स्यात्। अथ यदि मीमांसकसरण्या शब्दानां वर्णध्वनिभेदेन द्वैविध्यमेवं वर्णानामभिव्यञ्जकाभिव्यङ्ग्यभेदेन द्वैविध्यमाकलय्य उदात्तानुदात्तत्वादि विरुद्धधर्माध्यासेन वर्णध्वनीनां नित्यत्वासम्भवेऽपि तदभिव्यङ्ग्यवर्णसमूहरूपपदस्य नित्यत्वे त्वत्यभावात् तत्र शक्तिग्रहापादने 'गौरित्येकं पदम्' 'गोमानय शुक्लामित्येकं वाक्यम्' इत्यादिनानावर्णपदातिरिक्तैकपदवाक्यात्मकवाचकशब्दावगाहिप्रतीतिस्वारस्यभङ्गप्रसङ्गात्।

अतः शाब्दिकदिशा "अकार एव सर्वा वागि" तिश्रुत्या "अकारप्रधानकोङ्कारोपलक्षिते"त्यर्थिकया तथा "समाहितात्मनो ब्रह्मन्' इत्यादि निगदव्याख्यातस्मृत्या तथा 'परावागि'त्यादि इत्याद्याकारिकया शाब्दिकशिरोमणिभर्तृहरिकारिकया चान्तरप्रणवरूपस्फोटस्य मध्यमानादांशरूपरुषितस्य वैखरीरूपेण परश्रवणगोचरस्यान्तःकरणग्रह्यतया ब्रह्मण एव शक्त्याश्रयत्वेन वाचकत्वं निर्धारणीयम्। यद्यपि विवर्ताधिष्ठानस्वयम्प्रकाशात्मकस्फोटब्राह्मणो निर्धर्मकतया कत्वखत्वादिवर्णधर्माणां घटत्वपटत्वादिपदधर्माणां भेदप्रयोज्यानां वास्तवं समावेशो न सम्भवति। तथापि वर्णगतकत्वादेर्व्यञ्जकपदवाक्यगतघटत्वादेरसंसर्गाग्रहमर्यादया स्फटिकादिधर्मिकारुण्यादिवत् स्फोटात्मनि समावेशसम्भवात् अतः स्फोटात्मान्तरप्रणवरूप एव सर्वार्थवाचकः पदवाक्यात्मेति शाब्दिकसिंहनादः।

## ४—समासशक्तिविचारः

पं० श्रीकार्तिकेयझा, उग्रतारास० वि०, सॉढों

समासे क्लृप्तपदजन्योपस्थित्यैवसर्वेष्टसिद्धिरिति नातिरिक्ताशक्तिरिति वदतां तार्किकमीमांसकानां मतन्निराकुर्वतां विशिष्टशक्तिरितिशाब्दिकानाम्मतं सप्रमाणं पोषयतोतां तत्रभवतां कौण्डभट्टपादानां विचारांशभूतः समासशक्तिविचारः।

## ५—अर्थवादतात्पर्यनिर्णयः

श्री० प० डोंगरे वीरेश्वरशास्त्री, बेजवाडा

इह खलु निखिलपुमर्थानर्थसाधनीभूतयोर्धर्माधर्मयोः प्रतिपादको वेद एव। स च विध्यादिभेदेन पंचविधः। सर्वोप्ययं "एवाध्यायोऽध्येतव्य" इत्यध्ययनविधिना प्रयोजवदर्थावगमफलो अध्येयत्वेन परिगृहीतः। तत्र च विध्यादिभागस्य तत्परत्वं तत्तदधिकरणेषु निर्णीतं पूर्वतंत्रे, तद्वदेवार्थवादानामपि तत्रैव "आम्नायस्ये"त्यादिसूत्रेण आनर्थक्यमाशंक्य अनंतरं "विधिनात्वेकवाक्यत्वा" दित्यादिनासन्निधिपठितविधिनिषेध्यपेक्षित स्तुतिनिंदासमर्पकत्वेन नदित्यपि व्यवस्थापितम्। तत्रेदं विचार्यते—

किमेषां लक्ष्ये प्राशस्त्यादावेव प्रामाण्यं उत शक्यार्थेपि क्वचिदस्तीति-एवं स्थिते "शब्दार्थस्त्वप्रयोगभूतः, इतिसूत्रेण, "असद्वृत्तान्तान्वाख्यानं स्तुत्यर्थत्वेन" इत्यादिभाष्येण, तथा "प्राशस्त्यपराणामर्थवादानां स्वार्थसत्यत्वे प्राशस्त्यबुद्धिस्तथा न भवती" इति वार्तिकेण च स्वार्थासत्यत्वमेव तेषां प्रतिपाद्यते। युक्तं च तदेव। अन्यथा शास्त्रदृष्टविरोधादयस्तदवस्थाः स्युः। एवं सृष्टिप्रलयनिरसनं, सर्वज्ञनिरसनं, देवानां विग्रहादिनिराकरणं, च सर्वं तदैवोपपद्यते। अतः स्वार्थे न क्वापि तेषां प्रामाण्यमिति प्राप्ते यद्यपि एवं प्रतीयते तथापि तत्रैवं विचारयितव्यं-किमर्थवादेभ्यः स्वार्थो नैव प्रतीयते उत प्रतीतोपि न विवक्ष्यते इति। तत्र च स्वार्थप्रतीतेः सर्वानुभवसिद्धाया अपलापापत्त्या, शक्यार्थाऽनुपपत्तिप्रतिसंधानमूलाया लक्षणावृत्तेः शक्यार्थप्रतीतिमंतरेण संभवाच्च। नाद्यः पक्षो युक्तः-नापि द्वितीयः। प्रतीतार्थस्य परित्यागे कारणाभावात्। प्रमाणान्तरविरोधः क्वचिद्बाधकः "यथा, ग्रावाणः-" इत्यादौ, क्वचिच्च सिद्धार्थकत्वं, यथा वायुर्वा इत्यादाविति चेत् तथापि देवा सुरा संयत्ता आसन् इत्यादौ, तस्याभावात् न तथाऽभ्युपगमो युक्तः। तथा वाचा विरूपनित्यया, ब्रह्म स्वयंभु इत्यादीनां स्वार्थाऽसत्यत्वे वेदस्यापौरुषेयत्वं न स्यात् तथा मंत्राधिकरणे विधिशब्दाश्चेति सूत्रेण-शतं त्वाहेमंतान् इत्यादीनामर्थवादानां स्वार्थतात्पर्यमुपवर्णितम्,एवं यववराहाधिकरणे, त्रिवृच्चर्ववालाधिकरणे चित्राज्याधिकरणे, एवंमेव बहुष्वधिकरणेषु स्वार्थानुरोधेन सिद्धान्तकरणं दृश्यते। सर्वमेतदनुपपन्नं स्यात्।

अतोर्थवादानां स्वार्थेप्यस्त्येव क्वचित्प्रामाण्यंतथा सति सृष्टिप्रलयादीनां-देवताविग्रहादेश्च सिध्यापत्तिरितिचेत् यदि प्रमाणबला-

त्कथनार्थः सिध्यति तदाकस्तं प्रति क्रुध्यात्। उक्तं चैवमेव वार्तिककारेण। तथा देवताविग्रहादिविषये सूत्रकारस्य विरोध एव नास्ति। भाष्यं तु यथाश्रुतार्थम्। तथा पूर्वोपदर्शितानां अन्येषां च सूत्रभाष्यवार्त्तिकादिग्रन्थानां अविरोधेन समन्वयस्यापि संभवात् अर्थवादानां क्वचित् स्वार्थसत्यतायां न किमपि बाधकमिति।

# वेदपूर्वमीमांसाविभागः

## १—श्रौतानां कर्मणां स्वरूपं, तन्माहात्म्यं तेषां पारस्परिकसम्बन्धोविकासश्च

प० श्रीपट्टाभिरामशास्त्री, जयपुरम्

प्राञ्चस्सुमतयोऽस्माकं भारतवर्षीयाः पवित्रतमस्य भारतस्य समुन्नतिराध्यात्मिकशक्त्यधीनैवेति निश्चिन्वानास्तदर्थं पुरुषदोषैरसंस्पृष्टं स्वतःप्रमाणं भगवन्तं वेदमेव प्रमाणीकुर्वन्त. तदध्ययने तदुदितकर्मणांञ्चानुष्ठाने बद्धपरिकरा यथावत्तानि कर्माण्यन्वतिष्ठन्, येन चास्माकं भारतवर्षस्यानितरसाधारणं गौरवमद्यापि सर्वैरेवानुभूयते। भगवत्याः श्रुतेः "वैदिकानिकर्माणि नीरूपाण्यपि भारतमातुस्सन्तानभूतानां द्विजन्मनांशरीरै रूपवन्ति, अथवा भारतीयानां वैदिकान्येव कर्माणि रूपम्" इत्याशयः प्राचीनैरास्माकीनैरुन्नीत.। अत एव देशस्य समाजस्य वोन्नतये भौतिकानां वैज्ञानिकानां वा पदार्थानामाविष्करणे तेषां श्रद्धानोदभूत। पदार्थेष्वेषु रजस्तमोगुणभूयिष्ठत्वं तेऽन्वभवन्। सत्त्वगुणभूयिष्ठाया आध्यात्मिकशक्तेस्समदां नान्याकाचन शक्तिस्समुचिता देशस्येति सुदृढोऽभिनिवेशस्तेषाम्। पूर्वोत्तरकाण्डभेदेन विभक्तायाः श्रुते. कर्मणां स्वरूपं पारमार्थिक ज्ञानस्य च स्वरूपं प्रतिपादयितुमिदमेवोद्देश्यम् यदुत भारतीयास्साधनद्वयमिदमवलम्बमाना देशान्तरापेक्षया स्वकीयं देशं बलवत्तरं कुर्युरिति। एतावतानामयमाशयः यद्वेदे भौतिकसुखौपयिकसामग्र्यः, तदुत्पादनोपाया वा न सन्तीति, किन्तु तत्रैव वेदस्य तात्पर्यमिति साधनं नास्मभ्यं रोचते, अलौकिकपदार्थप्रतिपादनेन सह तेषामपि प्रतिपादनं चेद्वेदेन क्रियेत, तर्हि नास्ति तत्र विप्रतिपत्तिरिति।

तत्र कर्मणां चातुर्विध्यं वेदेन प्रतिपाद्यते दर्विहोमाः इष्टयः, पशवः, सोमाश्च। अमीषु च कर्मसु आधानसिद्धाग्निमतः, अध्ययनविधिसिद्धविद्यावतः, समर्थस्य च सपत्नीकस्य त्रैवर्णिकस्य सामान्यतोऽधिकारः। सायंप्रातर्नियमेनाहिताग्निना यथाविधिक्रियमाणमग्निहोत्राख्यं कर्म, तदितरे च होमा दर्विहोमशब्देनोच्यन्ते। प्रतिपूर्णमासं प्रतिदर्शञ्चाहिताग्निनैष्ट्यथाविधिक्रियमाणं दर्शपूर्णमासाख्यं कर्म "इष्टि" शब्देन यागशब्देन च व्यवह्रियते। इयञ्चेष्टिः नित्या काम्या च। अपराश्चानन्ताःकाम्याः इष्टयो वेदेन विहिताः, याश्च नैकविधानामैहि-

कानामामुष्मिकानाञ्च फलानामुत्पादिकाः। न चास्ति तादृशं भौतिकं फलं, यच्च येद्द्वारा न सम्पादयितुं शक्येत। एवं पशुद्रव्यकयागा अपि संख्यातीताः तानि तानि फलान्युद्दिश्य लोकानामुपकाराय विहितानि समुपलभ्यन्ते वेदे। एवं लक्षसंख्याकाः सोमलतासाध्यकास्सोमयागाश्च नित्याः काम्याश्च। काम्येषु कर्मसु बहूनां संवादानामुपलम्भो यद्यपि, तथापि संवादानामनावश्यकता च प्रत्येतव्या।

तत्र सर्वेषां होमानां प्रकृतिरग्निहोत्रम्, सर्वसाञ्चेष्टीनां प्रकृतिर्दर्शपूर्णमासौ, सर्वेषां पशुयागानां प्रकृतिरग्नीषोमीयपशुयागः। सर्वेषाञ्च सोमयागानां प्रकृतिर्ज्योतिष्टोमः। दर्शपूर्णमासाग्निहोत्रज्योतिष्टोमाः प्रकृतय एव, अग्नीषोमीयपशोः प्रकृतित्वं विकृतत्वञ्च। सौर्यादीष्टीनां वायव्यादिपशूनां अग्निष्टुदादिसोमयागानाञ्च विकृतित्वमेव। गृहमेधीयादीनामनुभयरूपत्वम्। विकृतित्वेनाभिमतानामिष्टीनां पशूनां सोमानाञ्च प्राधान्यमङ्गत्वं चा अग्नीषोमीयपशोरुभयरूपत्वात् प्राधान्यमङ्गत्वञ्चेति रूपद्वयमिति विवेक।

इमानि च कर्माणि तेन तेन वेदेन पृथक्पृथग्विहितान्यपि यथायथमङ्गाङ्गिभावप्रकृतिविकृतिभावरूपया शृङ्खलया परस्परं बद्धानि अनुष्ठातॄणां पुरुषाणां त्रय्यां ज्ञानवत्त्वमनुमापयन्ति।

## २—श्रौतयज्ञविवेचनम्

प० श्रीबदरीनारायणझा, चकसैद, मुजफ्फरपुर

यज्ञकर्मणः स्वर्गापवर्गार्हरूपपरमपुरुषार्थसाधकत्वम्। यज्ञे ब्राह्मणादित्रैवर्णिकानां सस्त्रीकाणामङ्गहीनादिवर्जानामधिकारनिरूपणम्। शूद्रेऽपि यज्ञपात्रसम्पादकत्वेन रथकारादीनामाधानाधिकारसमर्थनम्। ततो यजमाननिरूपणम्। यजमानस्यावश्यकयोग्यताप्रदर्शनम्। यजमानस्य प्रतिनिधभूतानां दक्षिणाक्रीतानां ऋत्विजां निरूपणम्। ब्राह्मणातिरिक्तामार्त्विज्य प्रतिषेधनम्। ऋत्विजां योग्यताविवेचनम्, तत्संख्यापरिगणनञ्च॥ ऋत्विजां दक्षिणाद्रव्यविभागक्रमप्रतिपादनम्। यज्ञपात्रोपयोगित्वात् यज्ञियवृक्षपरिगणनम्। यज्ञपात्राणां स्रुक्स्रुवादीनां द्रव्यस्वरूपनिरूपणम्। यज्ञोपयुक्तानां नानाविधायुधपात्राणां प्रदर्शनम्। देवतामुद्दिश्य यज्ञार्थमुपकल्पितानां चरुपुरोडाशादीनां परिगणनम्, तन्निरूपणं च। आज्यमेव प्रदर्शनम्। कर्मार्थबोधकत्वेन कर्मकाले देवतास्मारकत्वेन च मन्त्राणां विनियोगनिरूपणम्। मन्त्राणामादावन्ते च प्रणवयोगविचारः। मन्त्राणां ऋषिच्छन्दोदैवतज्ञानस्यावश्यकता। ऊहनिरूपणम्। यज्ञपदार्थ-

निर्वचनम्। यज्ञस्य विष्णुरूपत्वप्रतिपादनम्। यज्ञानां भेदाः। पाकयज्ञानां सप्तविधत्वसमर्थनम्। हविर्यज्ञस्यापि सप्तविधत्वकथनम्। सोमयज्ञभेदाः। शिरोयज्ञविवेकः। अतियज्ञनिरूपणम्। राजसूयाश्वमेधयोः क्षत्रियमात्रस्यैवाधिकारित्वकथनम्। अग्निचयनवाजपेययोः ब्राह्मणमात्रस्याधिकारसमर्थनम्। अग्निचयनस्य कालनिरूपणम्। एकाहाहीनरात्रिसत्र-अयनसत्र-महासत्रादीनां भेदबोधनम्। श्रौतयज्ञेऽग्निविचारः। त्रेताऽग्निकुण्डनिरूपणम्। कुण्डनिर्माणप्रकारः। सभ्यावसथ्यकुण्डयोः निर्माणविचारः। श्रौतयज्ञमण्डपानां प्राग्वंशोदग्वंशानां परिगणनम्। तेषामायमादिविचारः। यज्ञदक्षिणानिर्णयः। अदक्षिणस्य यज्ञस्य निष्फलत्वविचारः। पूर्णपात्रनिरूपणम्। राजसूययज्ञदक्षिणाविवेचनम्।

---

## २—शब्दस्य नित्यत्वमनित्यत्वं वेति विमर्शः

प० श्रीखगेश्वरशर्मा, मधवारपुर, दरभंगा

लौकिकोभयसाधनत्वेन सर्वेषु प्रमाणेषु शब्दप्रमाणमेव गरीयः, शब्दमन्तरा प्रत्यक्षादिप्रमाणानामनिर्वाहात् ब्रह्मात्मकस्य शब्दस्य ज्ञानेन स्वर्गादिसुखसाधनत्वाच्च। ननु शब्दस्य नित्यत्वे नानेको युगपदुच्चारयेच्छब्दम्। नापि एकः शब्दो युगपद्देशपृथक्त्वेषूपलभ्येत न भवति एको देवदत्तो युगपत्स्रुघ्ने च मथुरायाम् चेति चेन्न। एकस्यापि घटस्य दर्शनस्पर्शनयोरिवोच्चारणस्य आदित्यवदेकस्यापि युगपदनेकत्रोपलब्धेश्च संभवात्। ननु शब्दस्यापि व्यापकत्वे काश्यामुच्चारितस्य कालिकातायामपि श्रवणं प्रसज्येतेति चेन्न भूमेरन्तरुदकसत्वेऽपि भूम्युत्खनकैरिव ध्वन्यादिना श्रोत्रदेशीयवायुं निस्सारयतामेव शब्दोपलब्धिसम्भवे सर्वत्र शब्दोपलब्धौ मानाभावात्। ननु शब्दोऽपि विज्ञानस्वरूप एव विज्ञानातिरिक्त वस्तुनोऽभावादिति चेन्न। विज्ञानस्यैव स्वीकारे घटज्ञानपटज्ञानयोरपि साङ्कर्यप्रसङ्गात्। ननु महापटस्यावयवनाशेन अल्पत्वस्य नाशाभावे महत्वस्य चोपपत्तौ पुद्गलाख्यावयवकृतमहत्वाल्पत्वयोरेव प्रतीतौ न नित्यत्वमेवेति व्यवस्था शब्दस्येति चेन्न, कुत्रचिदवयवत्वाङ्गीकारेण सर्वत्रावयवत्वाङ्गीकारे आकाशाभायोरप्यवयवत्वापत्तेः। नापि चक्षुर्ग्रहणायोग्यबहिरिन्द्रियग्राह्यजातिमत्वेन गुणत्वं शब्दस्य शब्दो द्रव्यं संख्याश्रयत्वादित्यनुमानेन सत्प्रतिपक्षग्रस्तत्वादिति।

## ४ — नियोगवाक्यार्थभावनावाक्यार्थवादयोः पौर्वापर्यम्

प० श्रीरामस्वामिशास्त्री' प्राच्यविद्यामन्दिर, बरोडा

नियोगवाक्यार्थवादः प्रभाकरगुरुप्रवर्तितः। भावनावाक्यार्थवादश्च तन्निराकरणपर्यवसायी भट्टकुमारिलप्रवर्तित इति। एतेन च निर्णयेन प्रभाकरस्य भट्टकुमारिलादर्वाचीनत्वं ततोऽधिगतविद्यत्व च प्रख्यातं बाध्यते। पूर्वतनस्य वादस्य प्रवर्तयिता प्रभाकरः पूर्वकालिक एव भवेत् न पश्चात्तन्नवादप्रवर्तयितुः कुमारिलादप्यर्वाचीन इत्यपि मन्वाना भूयांसो विद्वांसः। कुमारिलभट्टैः कृता शाबरभाष्यव्याख्या न तथा भाष्यहृदयस्पर्शिनं यथावस्थितभाष्यवाक्यावगम्यमर्थमनुरुन्धे यथा प्रभाकरगुरुणा कृतायां बृहत्यादिव्याख्यायां भाष्यार्थः भाष्यकारहृत्तलस्पर्शीवस्तुयाथार्थ्यानुयायी च समुपलभ्यते इत्यपि च वक्तारः पण्डिताः बहुलमुपलभ्यन्ते।

एतयोरनर्थावहयोर्व्यामोहयोर्निरसनाय वस्तुतत्त्वस्य यथावस्थितस्य प्रतिपादनायास्मिन् लेखे वादयोरेतयोश्चिरन्तनत्वं जैमिनेरपि पूर्वतनैर्मीमांसकैराहतत्वं निरस्तत्वञ्च सहेतुकं निरूप्यते।

तथा जैमिनेः शबरस्वामिनश्च स्फुटं भावनावाक्यार्थवादित्वे सत्यपि प्रभाकरगुरुणा तदीयग्रन्थावेव नियोगपक्षावलंबितया आख्यायमानौ कथं प्रभाकरगुरोः मूलकारहृदयानुयायि व्याख्यातृत्वं च साधयेतामिति इमावुभावर्थौ विदुषां दृष्टिपथमानीयेते विशेषविमर्शनाय प्रकृते लेखे।

## ५—भारते कृष्णयजुःसाधर्म्यसंग्रहः

प०श्री० क० वे० अनन्तनारायण शास्त्री, पुना

प्रतिज्ञाहेतुदृष्टान्तैरेव वस्तुयाथात्म्यावगम इति तान्त्रिकसमयदर्शनाद्दृष्टान्तविधया वेदार्थप्रकाशसमर्थमिदमिति विद्वांसः समर्थयन्ति। वेदानामिव भारतस्याप्यध्यापनात्, द्रोणादीनामपि भारताध्ययनदर्शनात्, स्वाध्यायब्राह्मणे ब्रह्मयज्ञाङ्गभूतशिरश्चक्षुरादिस्पर्शनेनेतिहासादिप्रीणनाम्नात नित्यतास्य सुस्पष्टैव। पाण्डवकौरवाणां देवासुरसाम्यमुन्नेयम्। देवासुरसमरप्रस्तावात् विविधविधितुल्यसंस्थादिविषयसद्भावात्, अनेकार्थवादप्रकाशनात्, सृष्टिविधौ क्वचिदादौ जलं, क्वचिन्मनः, ओषधीः, क्वचित्सांख्यरीत्या महदादींश्च ब्रह्मा ससर्जेति वेदतुल्यसृष्टिश्रवणात्, सृष्टिपूर्वं च किंचन नासीदिति श्रुतिसममिहापि न वै रात्र्यामित्यादिना तमोभवनप्रतिपादनात् चास्यकृष्णयजुः

साधर्म्यं निरूपितं भवति मदधीनेव सृष्टिरखिलापीति भगवद्वचनसंदर्भे तयानुशासनादौ च विशिष्य कृष्णयजुःसंहितापदक्रमजटास्वरूपप्रतिपादनात् कृष्णयजुर्विषये भगवतो विशिष्य समादरोऽपि ध्वनितोऽस्ति । एवं क्रत्वर्थवादप्रस्तावेषु, क्वचित्सत्रं, कुत्रचिद्राजसूयाश्वमेधादिप्रस्तावः, कुत्राप्यङ्गिरःप्रभृत्यग्निवंशकथनं, पथिकृदादिविशेषाग्निवर्णनं, ग्रन्थमध्ये शतरुद्रियप्रस्तावः, ब्रह्मकाण्डवत्तत्र तत्र शान्त्यादौ गीतासु च ब्रह्मप्रस्तावः इत्येवमादयो वहवी वैदिकविषयाः ख्यायन्ते । एवं ग्राम्याख्यपशुप्रस्तावः, आख्यायिकासु, विश्वरूपाख्यानं, इन्द्रकृतवृत्तवधः सोमस्य राजयक्ष्मग्रहणकथनं, मत्स्यशापः, अहल्याधर्षणं, त्रिपुराख्यानं अन्यत्र नाचिकेतोपाख्यानमित्याद्या वह्व्य आख्यायिका वेदसमा आम्नायन्ते ।

इत्थं भगवच्छलस्वीकारोऽपि दिविषद्वशाचारप्राप्त इति समर्थ्यते सावित्रचयनादिप्रस्तावनाच्च वैयासिकं महदिदं भारतं नूनं कृष्णयजुःसाधर्म्यं वहतीति वयमेकान्तेनाभ्युपगच्छामः ।

# मीमांसा-विभागः

## १—मीमांसकाभिमतप्रमाणनिरूपणम्

प० श्रीकुलानन्दमिश्र पातेपुर, मुजफ्फरपुर

नास्तिकास्तिकदर्शनानुसारं प्रमाणनिरूपणं बौद्धचार्वाक पौराणिकादीनां प्रमाणलक्षणखण्डनं च विधाय मीमांसकाभिमतप्रमाणलक्षणं तत्संख्यानिरूपणं चेति सर्वं विस्तरेण वर्णितमित्यत्र। यत्र तत्र युक्तिप्रदर्शने आकरग्रन्थानामेवाश्रयं गृहीतवान्।

## २—मीमांसाशास्त्रप्रयोजनम्

प० श्रीकृष्णोरझा संस्कृत महाविद्यालय, मुजफ्फरपुर

चतुर्विधपुरुषार्थसाधनीभूतधर्मतत्त्वप्रतिपादकमिदं मीमांसाशास्त्रं धर्मविचारप्रधानम्। आदौ धर्मस्वरूपं तन्महिमानिदर्शनं च प्रदर्शितम। आचार्यैः स्वीकृतधर्मलक्षणे युक्तायुक्तविचारपूर्वकं प्रमाणतर्कोपन्यासः कृतः। नैयायिकसौगतादीनां धर्मलक्षणपरीक्षे च प्रदर्शिते। धर्मे च विधिवाक्यस्यैव प्रामाण्यमित्यपि निरूपितम। अनन्तरमपूर्वस्वरूपनिरूपणं अङ्गत्वविचारश्च प्रदर्शितः। मीमांसाशास्त्राध्ययनावहेलया संसारे कथं धर्महानिः दुःखाधिक्यमित्यादि दयनीयां दशां च प्रदर्शितवान्।

## ३—कृष्णयजुर्वेदे देवतामहिमा

प० श्री एस सुब्रह्मण्यशास्त्री०कुमकोणम

प्रथमं तावद्वेदमीमांसा कृता। तत्र वेदस्य वेदतां प्रदर्शितवान्। क्रमशः कर्मसु देवानां कीदृशं स्थानमभिमत—गुणत्वमेव, देवतोद्देशने द्रव्यत्यागो हि यागः, स एव प्रक्षेपसहितो होमः। अत्र सर्वत्र देवताः उपकारिकाः। कर्मोपकारिकाणां देवतानां स्वरूपं तु तत्तच्छब्द रूपमेवेति मीमांसकाभिप्रायकथनम्। तदनु देवतानां विग्रहवत्त्वं, नित्यत्वादिकं सर्वं प्रमाण-युक्तिप्रदर्शनपूर्वकं निरूप्य परमात्मैव देवता इति विविध श्रुतिस्मृति-प्रमाणोपन्यासपूर्वकं विनिश्चितम्।

## ४—वेदविषयः

प० श्रीवैद्यनाथझा, मुंगेर

वेदशब्दार्थनिरूपणपुरःसरं वेदानामपौरुषेयत्वम्प्रतिपाद्य व्यासकृतविभाजनानन्तरं वैशम्पायनक्रोधात् गृहीतयजुर्वेदादेवमनाग्निनान्तदुःखितो याज्ञवल्क्यस्सूर्य्याद्गृहीतशुक्लयजुर्वेदप्रचारम्प्रदर्श्य संक्षेपतो याज्ञवल्क्यचरित्रवर्णनं शुक्लयजुर्वेदाध्यायादिनिरूपणन्तत्प्रशंसा चेति।

## ५—मीमांसाशास्त्रम्

प० श्रीदामोदारशर्मा, मुंगेर

पूर्वं वादरायणजैमिनिराद्यानां अथातो धर्मजिज्ञासा इत्यादिसूत्रेण प्रदर्श्य मध्ये जैमिनेः पक्षं कर्मवादमवलम्ब्य प्रतिपाद्य वादरायणस्य चाप्रयोजनत्वं विधाय पश्चादुभयमीमांसाशास्त्रस्यैकत्वसमर्थनं कृतं तत्र तत्र शास्त्रनिदर्शनपूर्वकम्।

## ६—वेद-स्मृति-प्रामाण्यविमर्शः

प० श्रीभगीरथझा, सूरत

वेदस्मृतिप्रामाण्यविमर्शाख्येऽस्मिन् निबन्धे आधुनिकैरुद्भावितानां कतिपयानां प्रश्नानामुत्तराणि सोपस्करं निदर्शितानि। प्राचीनाः प्रश्नास्तु प्राचीनैरुत्तरिता एवेति नेह तन्यते। मन्वादिस्मृतिविषये कात्यायनादिकल्पसूत्रविषये ये चाधुनिकानामाक्षेपास्तेऽपि स्मृतिविभागे उत्तरांशे समाहितानि।

## ७—अतिदेशषट्कम्

श्री० चे० शे० सेतुरामः

पूर्वमीमांसाशास्त्रस्य द्वादशलक्षणयात्मकस्य न्यायसहस्रगुम्फितस्य कर्मतत्त्वनिर्णयार्थमन्यत्रापि ब्रह्मविचारे सञ्चारार्थं च न्यायव्युत्पादनं चिकीर्षता भगवता जैमिनिना परमकारुणिकेन महर्षिणाप्रणीतस्य दर्शनस्य बालानां सुखावबोधाय तत्प्रमेयसङ्ग्राहकः प्रकरण-

बन्धः अतयावश्यक इति संप्रतिपन्नोऽयं विषयः। तत्र पूर्वषट्क-
मेयार्थसङ्ग्राहकं मीमांसान्यायप्रकाशाख्यं प्रकरणरत्नं श्रीमदापदे-
प्रणीतं जागर्ति तद्वत् उत्तरषट्कप्रमेयार्थसङ्ग्राहकं किंचन प्रकरणं
लानां सुखावबोधाय बहोः कालादपेक्षितं नाद्यावधि अभिव्य-
म्। तत्र महान्तो यत्नं कुर्युरिति अभिकाङ्क्षमाणोऽयं जनः
तरषट्कप्रमेयार्थान् अस्मिन् प्रबन्धे संजिघृक्षति।

अनेनैव पथा बालानामुपादेयानुपादेयविषयान् इदंतया विविच्य
मीचीन परिनिष्ठितं मीमांसान्यायप्रकाशवत् सर्वैरप्युपादेयं उत्तर-
ट्कप्रमेयार्थसङ्ग्राहकं किंचन प्रकरणं मीमांसकविद्वत्तल्लजानां
यत्नेन अचिरात् प्रकटीभूयादित्याशासे।

# आयुर्वेद-विभागः

## १—आयुर्वेदधर्मशास्त्रयोस्सम्बन्धः

प०श्रीशीलानाथझा, धोरडीहा, दरभगा

साम्प्रतं प्राप्तस्वातन्त्र्यस्यस्थित्यै सुशिक्षितहिन्दुस्थानिनां मनुष्याणामावश्यकता सुबुद्धिमान् प्रचारकश्च साधुखाद्यान्नमपेक्षते। अतः देशकालपात्रानुरोधेन हिन्दुधर्मशास्त्रवर्णितं खाद्यान्नमवलम्ब्य प्रस्तुत लेखोऽयम्। यस्मिन् विधर्मिसंसर्गवशपाश्चात्यशिक्षाप्रभावेण संस्कृतशिक्षावञ्चितानां हिन्दूनां हिन्दूधर्मशास्त्रे विश्वस्तयितुं धर्मशास्त्रवर्जितानां पलाण्डुलशुनादीनाम् भक्ष्याभक्ष्यविषये विज्ञानमयायुर्वेदशास्त्रतो निषेधे को हेतुरिति प्रदर्श्य पुनः धर्मशास्त्रायुर्वेदशास्त्रयोरन्योन्य संबन्धं दर्शितम्।

---

## २—आयुर्वेद रसायननिर्माणविधिः

प०श्रीशशीन्द्रपाठक, मधुबनी

आयुर्वेदविज्ञानविषये रसायननिर्माणविधानमेव काठिन्यपद्धतौ समायाति। यतो हि द्रव्यादि साधुभस्मविधानमथ च पारदगंधक आदि शोधनप्रकारोऽसम्यक् सम्पादितो रोगाणामुत्पादयिता रोगिणां संहर्त्ता च भवति। अतस्तथा यतितव्यं यथा पारदादिशोधन धातवादिमारणप्रकारश्च साधुसम्पादितो भवेत्। पूर्वोक्तं कार्य्यं साधु सम्पादितं सम्यग् रसायननिर्माणे औषधादिनिर्माणे च सौलभ्यसरणिमनुसरति। अतोविविच्य रसधात्वादिशोधनमुक्तवान्।

---

## ३—हृदयम्

श्रीबाबूप्रसादझा, देकुली, दरभगा

आयुषो वेदे हृदयं नाम रक्तसंग्रहणारेणस्थानयन्त्रं निगद्यते। तदितर शास्त्रे आत्ममुख्यस्थानं शरीरपुरे निगद्यते। एतद्भिन्नविचारस्य प्राचीनाचार्यसम्मतौ किं कारण मासीदिति। विचार्य्यमाणोपि पक्षः किंचिल्लिङ्गं नभ्युपैति। अस्तु तावत् प्राचीनाचार्यभिन्नमतिरस्मन्मते तु हृदयमात्मस्थानं मुख्यतया नाङ्गीक्रियते।

मस्तिष्कं हि शीर्षापरपर्यायं तदायतनमिति सांप्रदयिका अभिवदन्ति। वेदे निगद्यमानं हृदयं शीर्षमभिहितम्। हितम् पुण्डरीकाकारत्वं तु मस्तिष्कानुमस्तिष्कयोरवतिष्ठ त्येवाहृदि अर्यामाते हृदयमिति वैदिकानिरुक्तिः। आहरणात्‌विषयाणामिति दार्शनिकनिरुक्तिः। आहरणात्‌रक्तस्येत्यस्मन्निरुक्तिः। ऋषिवाल्मीकिश्लाके "हृदयञ्च स वन्धनम्।" इति मध्येन आयुर्वेदम्मतमेव हृदयमभिहितम्। "हृदयं चेतना स्थानमिति" सुश्रुतोक्तिस्तु जीवनमाश्रयं रक्तमित्यभिप्रायेण। अन्यथा समाधीयमाना तदुक्तिर्भान्तिरेवाभिहिता स्यादिति। तदेवं समभिहितम् हृदयं धमनीद्वारेण रक्तं शरीरपोषाय सर्वकायाभिमुखमीरयति संचिनोति च सिरामुखेन रक्तं स्वभिमुखम्।

एवं शरीरयात्रानिर्वहति सा नयात्राच। यदा च केनापि योगेन रक्तयात्राविपद्यते तदैव मृतियोगोऽवश्यंभावीति शरीरं जानद्भिरभिमन्यते। तच्च हृदय यथा मानं यथाक्रियमिति प्रधाननिवन्धे यथा तथा मभिहितमिति नेह प्रतन्यते। हृदयस्तु द्वेधा सम्पद्यते रक्तशुद्धिद्वारा मनःशुद्धिद्वारा च शुद्धिरपि तत्तत्प्रसन्नताजन्यैव स्वीक्रियते अशुद्धिस्तु अन्य समिश्रणजन्यैव भवति। स्वतन्त्र हृदयरोगस्तु स्वाश्रयो वातादिजन्यः। कृमिजनयस्तु कठिनतमो निगदितः। सामान्य चिकित्सापद्धतिस्तु मुख्यनिवन्ध उक्तत्वेन द्विर्नाभिधीयते।

## ४–आयुर्वेद पञ्च कर्म

प० श्रीराजेश्वर शर्मा, सुगौना

आयुर्वेद शास्त्र मे पञ्चकर्म-चिकित्सा प्रधान मानल गेल अछि ओ वमन, विरेचन, अनुवासन (तैलवस्ति), निरूहण (क्वाथवस्ति) तथा नावन (नस्य) एहि पाँच नामसँ प्रसिद्ध अछि। कोन कर्म करओलासँ कोन दोष शान्त होइतछैक ई विषय जन साधारण कें वोध करेवाक हेतु ऋषिवचनसँ प्रमाणित करैत ई निवन्ध लिखलगेल अछि।

वमन करौला सँ श्लैष्मिक रोग शान्त होइतअछि। विरेचन करौलासँ पैत्तिकरोग शान्त होइत अछि। अनुवासन (तैलवस्ति) सँ वायुकेर रुक्षभाव नष्ट होइत छैक। जकर अनुसरण कय आइ काल्हि पाश्चात्य चिकित्सकगण ग्लिसरिनकेर पिचकारी दै छथि। निरूहण (क्वाथवस्ति) सँ वायुकेर रूक्षभाव नष्ट होइ

छैक। एहि दूनू प्रकारक वस्ति चिकित्सा सँ वायु शान्त होइत अछि। नावन ( नस्य ) प्रयोगसँ शिरोगतरोग शान्त होइत अछि।

## ५ -त्रिदोष विज्ञान

प०श्रीजगदीश नारायणशर्मा, आयुर्वेदाचार्य्य, मुजफ्फरपुर

१—भारतीय चिकित्सा शास्त्र का सैद्धान्तिक आधार त्रिदोष विज्ञान है। यह चिकित्सा के आदि काल से अबतक लगातार सफलता के साथ प्रयोग में लाया गया है यह त्रिदोष विज्ञान, संसार के चिकित्सा विज्ञान के लिए, आयुर्वेद शास्त्र की एक देन है। आधुनिक वैज्ञानिकों का यह कर्त्तव्य हो जाता है कि वह भारतीय चिकित्सा शास्त्र की इस देन से अपने देश के चिकित्सा विज्ञान के कोष को पूर्ण करें।

२—त्रिदोष क्या है? त्रिदोष से, वायवीय, आग्नेय और जातीय तत्त्व का ग्रहण होता है। उक्त तीनों तत्त्वों के ही योग से पांच भौतिक सृष्टि उत्पन्न होती है। संसार के संरक्षण के लिए भी इन तत्त्वों की आवश्यकता हम प्रत्यक्षरूप से अनुभव करते हैं। इसमे भी वायवीय तत्त्व ही प्रधान तत्त्व है। आग्नेय और जातीय तत्त्व से ही प्रेरित होकर सृष्टि के उपर्युक्त कार्य में प्रवृत्त होते हैं। इसका यह तात्पर्य नहीं है कि आग्नेय और जलीय तत्त्व का कोई अर्थ नहीं है। सत्त्व, रज और तम क्रमशः तपित्त और कफ के अन्तर्गत हैं। धार्मिक त्रिगुणमयी सृष्टि का यही रहस्य है। वायवीय सजीव सृष्टि मे इनकी प्रधानता ओत प्रोत है।

३—त्रिगुण और त्रिदोष, दोनों शब्द एक ही अर्थ के द्योतक हैं। रोगावस्था मे शरीर में के दोषों मे सर्वप्रथम विषमता आती है और आरोग्यावस्था में इन दोषों का साम्य रहता है। त्रिगुण की विषमता से शारीमें से रस-रक्त आदि दूषित होकर, रोगोत्पत्ति के कारण होते हैं। अतः उन्हीं त्रिगुण से सृष्टि ओत प्रोत है। न तदस्ति पृथिव्या वादिनि देवेषु वा पुनः। सत्त्वं प्रकृतिजैर्मुक्त-येदेभिः स्यात् त्रिभिर्गुणैः का इसी ओर संकेत है।

४—त्रिदोष की अंशांश विकल्पना से औषधिस्थित त्रिगुण की अंशांशविकल्पना निर्धारित कर, रोगी के लिए औषधि व्यवस्था की जाती है। सजीव सृष्टि की भांति खनिज, तृण, लता आदि

लता आदि में भी त्रिगुण का समावेश है। जड़ सृष्टि में भी मूक रूप से जीवांश विद्यमान रहता है।

५– किसी पदार्थ की भस्म भी त्रिगुणों से रहित नहीं है। उसमें त्रिगुण सूक्ष्म रूप से रहते हैं। यहाँ तक विवेचना है कि किसी खास काष्ठ की तद द्रव्योचित त्रिगुण की सत्ता का किसी भी हालत मे नाश सम्भव नहीं।

६—त्रिदोष विज्ञान के आधार पर स्थित रहने के कारण भारतीय चिकित्सा विज्ञान बड़ा ही सुलभ और प्राकृतिक है। रोग चाहे किसी कारण से उत्पन्न हों और किसी भी पद्धति द्वारा निर्मूल हों, उनमें रोगावस्था में त्रिदोष की विषमता और आरोग्यावस्था मे त्रिदोष की साम्यावस्था होती ही है। "तदेव युक्तं भैषज्यं यदारोग्याय कल्पते। स चैव भिषजां श्रेष्ठो रोगेभ्यो यः प्रमोचयेत्।" का यही अभिप्राय है।

७—सृष्टि के मूल तत्त्व के समीप वायवीय तत्त्व जितना अधिक है उतना आग्नेय और जलीय नहीं। क्योंकि, प्रेरणा वायवीय तत्त्व का ही गुण है, अन्य का नहीं।

८—पृथ्वी आदि पंच महाभूतों का भी समावेश त्रिदोष में हो जाता है। ध्वनिग्राहकयन्त्र दिव्य चक्षुयन्त्र आदि यन्त्रों में वायवीय तत्त्व ही को करामात है। इथर वायवीय तत्त्व से अलग नहीं। इसीलिए, वायवीय तत्त्व के गुणों का वर्णन ईश्वरीय विशेषणों के शब्दों मे किया गया है। हमारे महर्षि त्रिकालदर्शी थे, उन्होंने तत्त्वों पर अधिकार पा लिया था। अतः तत्त्वों को चिकित्सोपयोगी बनाने मे उन्हे सफलता प्राप्त हो चुकी। इस शरीर रूप पांच भौतिक यन्त्र से अधिक सुन्दर और पूर्ण, दूसरा यन्त्र हो ही नहीं सकता। यह सत्य सिद्धान्त है। हां, आधुनिक यन्त्रों ने, हमारी भूतकाल की सिद्धियों की बातों को विश्वास योग्य प्रमाणित कर दिया है।

९—शरीर के पोषण के लिए जो आहारादि का प्रयोग होता है, उनमें त्रिदोष का समावेश होने से उन २ गुणों को उत्पन्न करता है। हम प्रकृति के अनुसार खाद्य की इच्छा करते हैं। जिस तत्त्व की कमी होगी, उसी की पूर्त्ति का साधन खाद्य सामग्रियों में हमें मिलेगा। हमारी मानसिक चेष्टाएं भी त्रिगुणों से रहित नहीं है।

१०–ऋतुओं में भी त्रिदोष की विशेषता रहती है। तारामण्डल में भी त्रिदोष का समावेश है। सूर्य आदि नक्षत्रों का हमारे जीवन

क्रम पर बड़ा व्यापक प्रभाव होता है। हमारी चिकित्सा पद्धति इन बातों पर पूरा ध्यान देती है। अतः वह पूर्ण है और स्वाभाविक। आधुनिक विज्ञान की भांति चंचल एवं परिवर्त्तन शील नहीं।

११—दर्शन की ईड़ा, पिगला और सुषुम्ना नाड़ियों का भी वात-पित्त-कफ से समन्वय है। ईड़ा चन्द्र यानी जालीय तत्त्व, पिगला सूर्य यानी आग्नेय तत्त्व, और सुषुम्ना वायवीय तत्त्व के रहस्य की परिचायक हैं। चन्द्र-सूर्य-वायु के द्वारा, बाहरी सृष्टि ही नहीं देह धारियों की शारीरिक सृष्टि की भी रक्षा सम्पन्न होती है। आधुनिक यन्त्रों के भी मूल आधार त्रिगुण ही हैं। एक बात अवश्य विचारणीय है कि ऋषियों की पूर्णता व्यक्तिगत थी किन्तु, आधुनिक यन्त्रों की विशेषता यह है कि वह समष्टी के लिए है। एक मूर्ख भी यन्त्रों के द्वारा उतना ही ज्ञान प्राप्त कर सकता है जितना एक पंडित। ऋषियों का पूर्ण ज्ञान व्यक्तिगत था। हम लोगों को चाहिए कि प्राच्य और प्रतीच्य विद्वान् मिलकर त्रिदोष की अशांश विकल्पना की माप परीक्षा का एकयन्त्र प्रस्तुत करें। यह चिकित्सायुग की एक बहुत बड़ी देन होगी।

## ६—अष्टांगव्यापक पंचकर्म

पं० श्री०रामेश्वरमिश्र, वासुदेवपुर, मुजफ्फरपुर

आज हम कंगाल, निर्धन और रोगग्रस्त हो रहे हैं। देश के कोने कोने मे रोगग्रस्त व्यक्तियों की चीत्कार कान के पर्दों को फाड़े विना नहीं रहती। कारण क्या है? हम लोग मृगतृष्णा में फँसे हुए हैं। वह मृगतृष्णा कौन सी है? पाश्चात्य चिकित्सा। हमारे देश वासी इसीको आरोग्यमूल मान कर इसकी ओर झुके हुए हैं। फलतः हमारी दशा दयनीय हो रही है।

प्राचीन काल में जब देश के कोने कोने से रोगग्रस्त व्यक्तियों के त्राहि त्राहि की आवाज से आकाश गुंजायमान हो रहा था। ऐसी विकट समस्या में धन्वन्तरि ने अवतीर्ण होकर लोगों का कल्याण किया। रोगग्रस्त व्यक्तियों को रोगमुक्त किया। उनकी चिकित्सा कवि प्रणीत आयुर्वेदी अष्टांग व्यापक पंचकर्मान्तिगत हुआ करती थी।

लोगों में थाइसिस कुष्ठादि विनाशकारी रोगों का प्रसार दिन

दूनी रात चौगुनी के तौर पर हो रहा है। इन रोगों का निर्मूल होना तो दूर रहा, इनसे आपेक्षित छुटकारा पाना भी असम्भव सा हो रहा है। पर हमारे प्राचीन महर्षियों के सिद्धान्तानुसार ये रोग निर्मूल हो सकते हैं। कहा गया है—सर्वेषाम् कुष्ठिनामादौ पंचकर्माणि कारयेत्।

जबकि मैं अथर्व वेदसे आविर्भूत आयुर्वेद के तत्वों का अनुसन्धान करता हुँ, तो पंचकर्मात्मक चिकित्सा ( वमन, विरेचन, वस्ती, रक्त मोक्षण और नस्य ) ही दृष्टि पथ मे उतर आते हैं।

विलम्बिका ( सूखा हैजा ) नाम की बिमारी मे 'वमन' उद्धक, रक्तपित्त की कठिन बिमारी मे 'विरेचन', घोर वातजन्य लकवा एवं उदर रोग मे वस्ती ( अनुवासन और निरूहण ), कालाजार ( प्लीहा ) मे 'रक्तमोक्षण' और कृमिजन्यशिरोरोग में 'नस्य' अमृत की तरह सफल सिद्ध हुआ है। थाइसिस ( राजयक्ष्मा ) में 'वमन', 'विरेचन' और 'वस्तो' काम करती है। असाध्य काकण कुष्ठ मे 'वमन,' 'विरेचन,' 'रक्तमोक्षण' और 'नस्य' अपना प्रभाव लाये विना नहीं रहते।

हमारी वस्ती मृतशय्या पर लेटे मृतप्राय मनुष्य को क्षण मे ही चेतना प्रदान करती है। पाश्चात्य चिकित्सा मे इसीका अनुकरण 'डूस' और 'एनीमा' है, जिससे केवल 'विरेचन' का काम लिया जाता है। पर शतपाक और सहस्रपाक महानारायण तैलादि की वस्ती से ८० प्रकार के वात रोग, पक्षाघात ( लकवादि ) निर्मूल हो सकते हैं। इतना ही नहीं वरन् दुष्टवायु प्रधान होने से ही अनेकानेक रोगों के प्रादुर्भाव होते हैं। कहा गया है:—शाखागती कोष्ठगता इत्यादि।

इसलिये एक आचार्य के मत से तो समग्र चिकित्सा इसी वस्ती पर निर्भर करती है। जैसे:—तस्मात् चिकित्सार्द्ध इत्यादि।

'पंचकर्म' की आवश्यकता केवल रोग पीड़ित मनुष्यों के लिये ही नहीं होती वरन् आरोग्य एवं दीर्घायु बनने के लिये, और बुढापा से छुटकारा पाने के लिये स्वस्थ मनुष्यों को भी पँचकर्म करा लेना आवश्यक है। कहा गया है–माधव प्रथमे मासी त्यादि।

आज रोग से जनसमुदाय का ध्वंस मेरी नजर के सामने आ जाता है। प्लेगादि संक्रामक रोगों का प्रचार दिन व दिन

ढ़ रहा है। इसका कारण 'प्रज्ञापराध जनित असत् कर्मादि धर्म है। इसी से वाय्वादि दूषित हो जाते हैं। फलतः विध्वंसकारी संक्रामक रोगों के प्रादुर्भाव होने लगते हैं।

इसकी चिकित्सा महर्षि पतञ्जलि चरक के अनुसार पंचकर्म से हो सकती है। जैसे कि कहा गया है—कप पंचविधं तेषां भेषजं समुच्यते इत्यादि। बोहय पंचकर्म' से पाटवादिक शुद्ध हो सकते हैं। इसलिये अगर हम 'पंचकर्म, की शरण ग्रहण करें तो प्लेगादि संक्रामक रोगों का भय जाता रहेगा।

इसलिये प्रत्येक स्वस्थ एवं रुग्ण मनवों के लिये यह पंचकर्म कल्पित रूपमे चिकित्सा सदैव प्रशंसनीय है।

## ७ – क्षय रोग

प०श्रीजयकान्तझा, रामभद्रपुर, दरभंगा

पाचन आदि क्रियाओं की कमी होकर रसआदि सप्त धातुओं का शोषण होने से मनुष्यों को जो रोग होता है उसको क्षय रोग या शोष रोग कहते हैं। साधारण नियम यह है कि अन्न आदि जो जो पदार्थ खाये जाते हैं उनका पाचनदिक्रिया से रस होता है। रस से रक्त होता है, रक्त से मांस होता है, मांस से मेद होता है मेद से हड्डी होती है, हड्डी से मज्जा होती है और मज्जा से वीर्य होता है। यथा रसाद्रक्त ततो मांस मांसान्मेदः प्रजायते मदेसोस्थि ततो मज्जा मज्जायाः शुक्रसम्भवः। इस प्रकार मनुष्य के शरीर का हमेशा पोषण हुआ करता है। पर जब ऊपर कहे हुए रसमें से धातु बनने की क्रिया पाचन क्रिया की विकृतसे रुकती है तब शरीर का पोषण होना बन्द होता है और शरीर सूखने लगता है उसको क्षय कहते हैं।

क्षय रोग होने के सात कारण हैं साहस, संधारण मल मूत्रादिवेगधारण, रसक्षीणता धातुक्षीणता, विषमाशन, व्रण, और वृद्धावस्था। साहस शरीर की शक्ति के बाहर काम करने को साहस कहते हैं। जैसे थके होने पर दौड़ना, हद से अधिक कसरत करना दौड़ते हुए घोड़े बैल, हाथी, आदि को एकदम पकड़ कर रोकना अपने से बलवान से कुश्ती लड़ना, बड़े बड़े पत्थर, लकड़ी आदि वजनी चीज़ उठाना, बहुत ऊँचे से कूदना, बहुत ऊँचे से गिर जाना हद से ज्यादा पढ़ना, बहुत जोर से बोलना, बड़ी बड़ी नदियां

तैर जाना, आदि थकावट लाने वाले और हृदय को चोट पहुंचाने वाले काम कर रूखा सूखा खाय और ऊपर से स्त्री प्रसङ्ग करे तो इससे वायु कुपित होकर छाती मे जखम पैदा करती है और कुपित तेज वायु जब मर्म स्थान की गांठों मे घुसती है तब सुस्ती और ज्वर उत्पन्न करती है। वह दशा जितना अधिक समय तक रहती है वायु उतनी ही बलवान होकर अंतड़ियो मे प्रवेश करती है। तब अरुचि उत्पन्न होती है और अन्न नहीं पचता है तथा जठराग्नि मन्द हो जाती है। अन्त में वह वायु कण्ठ मे प्रवेश कर जाता है वायु का इस विषम गति से खाये हुए अन्न आदि का रस रक्त हो के कफ रूप से खांसी द्वारा बाहर निकलता है और रोगी धीरे धीरे सूखने लगता है ऐसे जखम वाले रोगी के कफके साथ खून भी गिरता है।

संधारण मल मूत्र अपान वायु भूख प्यास इत्यादि उतरती वेगों को रोकना संधारण कहलाता है। उतरती वेगों को रोकने से वायु का कोप बहुत बढ़ कर कुपित वायु शरीर मे इधर उधर घूम कर शूल उत्पन्न करती है, कोख मे दर्द पैदा करती है है और कण्ठ, छाती तथा शिरमें पीड़ा लाती है तथा खांसी, दमा और ज्वर पैदा करती है इससे जठराजिन मन्द होती है और अन्न हजम नहीं होता जिससे रस आदि धातुओं की उत्पत्ति नहीं होती और बीमार धीरे धीरे सूख जाता है।

रसक्षीणता जब मनुष्य का हृदय अति चिन्ता, ईर्ष्या, भय-क्रोध और अति उत्कण्ठा आदिसे ग्रस्त होता है तथा दुर्वल मनुष्य बहुत उपवास करता है, रूखा-सूखा खाता है खाय! थोड़ा खाता है। मनुष्य के हृदय का रसक्षीणता को प्राप्त होता। तब वायुकुपित होकर खायी हुई चीजों को पचने नही देती, इससे रस कच्चा रहता है और शरीर का पोषण नहीं होता जिससे सबधातुओंका शोषण होकर शरीर सूखने लगता है।

धातुक्षीणता (वीर्यक्षय) अधिक विषय करने से अथवा अन्य प्रकार के कुटेव वा प्रमेह से मनुष्य का वीर्य क्षीण होजाता है। इस प्रकार वीर्य क्षय होते रहने पर भी विशेष विषय करने से वीर्य के बदले कभी कभी रक्त भी जाता है, तब वीर्य हीन पड़ी हुई वीर्य वाहिनी नाड़ी मे वायु घुसकर वीर्य स ऊपर की धातु मज्जा को सुखाकर हड्डी को सुखाती है और फिर क्रमसे रसतक मल धातुओं को सुखा देती है धातुओंके सूखने से शरीर सूख जाता है। शरीर पीला और फीका पड़जाता है, पसलियों और गांठों मे दर्द होता है,

अन्न नहीं पचता और ज्वर मचलाहट अरुचि तथा खाँसी शिरमे दर्द होता है, और मुंहका स्वाद विगड़ जाता है।

विषमाशन अर्थात् अनुचित रीतिसे आहार करना देश काल प्रकृति सयोग आदि जाने विना-खाने पीने की चीज का वेनियम सेवन करना विषमाशन कहलाता है। वहुस्तोकम कालेवा ज्ञेयं तद्विषमाशनम्—विविधान्यन्नपाना निवैषम्येण समश्नतः। जनयन्त्यामयान्घोरान।विषमामाहतादयः। रुद्ध. स्रोतांसि धातूनां वैषम्याद्विषमं गताः। दोषा रोगाय जायन्ते ने पुष्यन्ति च धातवः इति। विषमाशन करने से अन्न आदि ठीक ठीक नहीं पचते और उनका लहू आदि वनने के बदले सब मल मूत्र वनने लगता है, इसमे धातुओंको पोषण नहीं मिलता और वात-पित्त और कफके दूषित होने से उनका कोप वढ़ता है, वायु कुपित होने से शूल, आलस्य पसलियों में पीड़ा, पिंडलियोंमे।चमक, और स्वरभंग करती है, पित्तसे ज्वर अतीसार और भीतर जलन होती है, कफसे शिर भारी होता है और खांसी तथा अरुचिउत्पन्न होती है। ऊपर लिखे अनुसार उत्पन्न हुई खांसी कलेजे मे जखम पैदा करती है। तब कफ के साथ कभी कभी खून गिरता है। खून गिरने से दुर्गन्ध तथा कमजोरी आती है। जिससे शरीर सूख जाता है।

व्रण गरड अर्थात् उरः क्षत वक्षस्थल मे घाव हो जाने से रक्त या पीवके अधिक जाने से क्षयरोग उत्पन्न होता है क्योंकि रक्त जाने से मनुष्य अशक्त हो जाता है और हिल चलनहीं सकता। इससे जठराग्नि मन्द हो जाती है, और खाये हुए अन्न आदि हजम नहीं होते। इससे रस आदि धातुओं की उत्पत्ति नहीं होती जिससे शरीर सूखने लगता है। वह क्षय प्राय असाध्य होता है। व्रणः क्षतं उरः क्षतमुरोन्तरभिघातजनित व्रणः—यदुक्तं सुश्रुते केषांचिदेवं शोषोहि कारणैमेदमागत.। न तत्रदोपलिङ्गा- नां समस्तानां निपातनम् क्षया एवहिते ज्ञेया प्रत्येकं धातु संक्षयात् इति।

जराशोष—वृद्धावस्था-वृद्धामे जठराग्नि के मन्द पड़ जाने से क्षय शुरू हो जाता है शरीर काँपने लगता है, अरूचि उत्पन्न होती है आवाज खोखली हो जाती है चमड़ा सिकुड़ जाता है और रूखा हो जाता है, बहुत यत्न करने पर भी कफ नहीं गिरता है। मल सूख जाता है, कान्ति सूख जाती है, सूखी खांसी होती हैं। इन सात कारणों के क्षय रोग लिख कर भेज रहा हूं।

## ८- आयुर्वेदक इतिहास

श्रीरामेश्वरगोपलझा, दुर्गागंज, पुर्निया

चिकित्सा शास्त्रक उत्पत्ति और प्राचीनता सृष्टिक आदिसँ मनुष्यशरीर व्याधिक आश्रय रहल अछि।"शरीरव्याध मन्दिरम्" वाक्य अत्यन्त प्राचीन थिक व्याधिक प्राचीनताक हेतु एकर चिकित्सो अत्यन्तप्राचीन अछि। सब देश अपना अपना विद्या आर बुद्धिक अनुसार चिकित्सा पद्धति तैयार कएलक।

आयुर्वेदावतरणः—संसार क सभ्य चिकित्सा पद्धति में आयुर्वेद सबसँ प्राचीन अछि। आयुर्वेद अथर्ववेदक उपाङ्ग थिक। "अथर्ववेदस्य आयुर्वेद उपवेदः। "एकर जन्म ब्रह्म सँ भेल। ब्रह्मा सँ दक्ष अश्विनी कुमार, इन्द्र, आर भरद्वाज आत्रेय के परम्परा क्रमशः ज्ञान प्राप्त भेल। आत्रेय ईसासँ ६०० वर्ष पूर्व तक्षशीला क समीप अग्निवेश, भेल, जतूकरण, पराशर, हारीत, आर क्षारपाणि के आयुर्वेद पढ़ौलन्हि। ई छओ शिष्य अपत अपन छसंहिता बनौलन्हि। किन्तु सम्प्रति भेल आर अग्निवेश संहिताक अतिरिक्त आन कोनो ग्रन्थ उपलब्ध नहि अछि। अग्निवेश संहिताक चरक संस्कार कएलन्हि। समाप्त होयवा सँ पूर्वे हुनकर मृत्यु भए गेला सँ काशीक वैद्य दढ़बल द्वारा पूर्ण भेल जे चरक संहिता क नाम सँ प्रख्यात भेल।

आयुर्वेदक मुख्यशाखा शल्य तन्त्रकज्ञान सर्वप्रथम इन्द्र सँ धन्वन्तरि आर धन्वन्तरि सँ सुश्रुत के भेलन्हि। सुश्रुतेक नाम पर सुश्रुत संहिता प्रचलित भेल। सुश्रुत अग्निवेशक समकालीन छला। सुश्रुतक मूल ग्रन्थ शल्य तन्त्रसम्बन्धी छल। द्वितीय शताब्दी मे एहिमें किछु चिकित्सांश जोड़ल गेल आर सप्तम शताब्दी मे वाग्भट्ट अपन "अष्टाङ्ग हृदय" नाम क ग्रन्थ मे शल्य, शालाक्य, कायचिकित्सा, भूत विद्या कौमार भृत्य, अगद, रसायन आर वाजीकरण आयुर्वेदक आठो शाखा क संक्षिप्त वर्णन केलन्हि। रस चिकित्सापद्धतिक एही समय में उत्पत्तिभेल। एकर जन्म दाता बाग्भट्ट मानल जाइत छथि। आयुर्वेदानुसार चिकित्सा पद्धति तीन भाग मे विभक्त बुझना जाइछ। (१) दैवी (रस), (२) मानवी (वनौषधि) आर (३) आसुरी (शस्त्र)। प्राचीन समय में तीनू शाखा क पूर्ण विकाश छल।

शस्त्रचिकित्सा क महत्वः—शल्य आर शालाक्य आयुर्वेदक मुख्य शाखा थिक अतः शस्त्र चिकित्सो आयुर्वेदवत् प्राचीन अछि। शल्यतन्त्रक उपलब्ध ग्रन्थ मे सुश्रुत मुख्य अछि। सुश्रुत

संहिता सँ ज्ञात होइछ जे औपधेनव, आरभ्र, वृद्धसुश्रुत, पौषकलावतन्त्र, वैतरणतन्त्र, भोजतन्त्र आदि शस्त्रचिकित्साक मुख्य ग्रन्थ छल। प्राचीन समय मे शल्यतन्त्र का पूर्ण महत्व छल। आर्य संस्कृति क अतिप्राचीन काल मे वैद्य किछु उपेक्षा दृष्टि सँ देखल जाइत छला किन्तु शल्यकोविद अपन शस्त्र पटुताक कारण समाज मे पुन उच्चस्थान प्राप्त केलन्हि। प्राचीन समय क युद्ध मे सेना क संगसंग शल्याचार्य रहै छलथीन्ह। शल्य चिकित्साक सब साधन उपस्थित रहैत छल। शास्त्र सँ ज्ञात होइछ जे सुश्रुत क समय मे शस्त्र चिकित्साक पूर्ण विकाश छल। शल्य क्रिया करवाक हेतु उत्तम लोह क वनल शस्त्रो उपलब्ध आर शल्यक्रिया क शिक्षो उत्तमरुपेण देल जाइत छल।

शल्य तन्त्र आर आयुर्वेदक अवनतिः—सुश्रुतक समय मे आयुर्वेदक पूर्ण उन्नति रहितो इ बुझना जाइछ जे हुनका बादे आयुर्वेदक अवनति प्रारम्भ भयगेल। एकर अनेक कारण अछि।

(१) सब सँ प्रधान कारण त शवच्छेदक्रिया क त्याग अछि शवच्छेदक्रिया त्याग क हेतु मन थिकाह। कारण मनु अपन स्मृति मे चिकित्सक विशेष कय शल्यकर्त्ताक विरुद्ध नियम बनौलन्हि जकर प्रभावसँ समाज चिकित्सक सँ घृणा करय लागल फलतः उत्तम आर मध्यम श्रेणीक व्यक्ति शल्यतन्त्रक तथा आयुर्वेदक पठन पाठन छोड़य लगला। अन्त मे आयुर्वेद केवल नीच जाति तथा नौआ जर्राह आदिक मध्य रहि गेल।

(२) मन्दिर क पुजेगरी आर साधुलोकनि अपन स्वार्थसाधनक हेतु झाड़, फूक टोटकाआदि सँ मूर्ख जनता के रोगोन्मूल करबाक प्रलोभन दय शल्य पढ़व आर ओहि द्वारा चिकित्सा करयबा मे बाधक भेलाह।

(३) प्राचीन समय मे संज्ञाहारी वस्तुके ज्ञान नहि छल आहि सँ लोक के भयावहशस्त्र सँ चिकित्सा करयबा में भयहोइत छल आर आचार्यो लोकनि अस्माध्यावस्थे में शस्त्र द्वारा चिकित्सा करबाक आदेश दैत छला। अतः शल्य कर्मक अभ्यास क्रमशः घटल गेल।

(४) बौद्ध समय मे प्राणीमात्रके साधारणो कष्ट देब राजाज्ञाक विरुद्ध मानल जाइत छल अतः शल्यकर्मो राजाज्ञाक विरुद्ध मानल जाय लागल आर अभ्यास छुटि गेला सँ अवनति होमय लागल।

(५) प्राचीन ऋषिप्रणीत वस्तु मे अन्धविश्वासताककारण एकर त्रुटि बाहार करब परम पाप बुझना जाइछ। अतः एहि सँ केवल शल्य तन्त्र ए नहिं बरन सभ शास्त्र क अवनति भेल आर भयरहल अछि।

(६) भारतवर्षक परतन्त्रतो आयुर्वेदक ह्रासताक कम कारण नहि थिक। प्रथम देश पर जंगली जातिक आक्रमण भेल जे प्राचीन ग्रंथ के जराय भस्मकय देलक बाद जखन मुसलमानक साम्राज्य भेल त आयुर्वेदक स्थान हिकमत के देलक आर पुनः जखन अंग्रेजक प्रादुर्भाव भेल त ओ आयुर्वेद आर हिकमत के यथावत् छोड़ि अपन पाश्चात्य चिकित्सा पद्धति के प्रोत्साहन देलक। फलतः आयुर्वेदक सूर्यास्त भेल आर पाश्चात्य चिकित्सापद्धतिक सूर्योदय भेल। संकुचित हृदयक शरणे वैद्य समाजो उन्नतिशील पाश्चात्य चिकित्सा पद्धति सँ नवीन वस्तु आर ज्ञान लेवाक प्रयत्न नहिं केलन्हि फलतः आयुर्वेदक ह्रास होमयलागल।

आधुनिक वैद्य समाजक कर्तव्य :—आयुर्वेद सहस्रो वर्ष सँ सहस्रो आपत्ति आर कुठाराघातक साम्राज्य वनलरहितो जीवित अछि से अत्यन्त परिश्रम, अनुसन्धान आर अन्वेषण द्वारा आयुर्वेदक मूल सिद्धान्त निर्देशकर्त्ता तथा प्रणोता ऋषिक तपस्याक फलथिक; किन्तु की आयुर्वेदप्रेमी के आवयुवदक वर्त्तमान दशा सँ सन्तोष छन्हि? की आयुर्वेद जीवित ज्ञान कहल जा सकैछ? की आयुर्वेद पाश्चात्य चिकित्सा पद्धति सँ टक्कर लय सकैछ?

जीवित विज्ञान ओ थीक जाहि में राति दिन उन्नति हो आर ज्ञानक भण्डार नित्य भरय। सम्प्रति वैद्य समाज क कर्तव्य थिक जे पक्षपात सँ रहित भय प्राचीन पुस्तक क प्रत्येक वाक्यक अनुसन्धान कय जे सत्य प्रमाणित हो तकरा मानि आर जे असत्य प्रमाणित हो तकरा छोड़ि नवीन विज्ञानानुसार आयुर्वेदक पुनरुत्थान क प्रयत्न करी। एही सिद्धान्तनुसार पाश्चात्य विद्वान हमरा लोकनिक अनेक विज्ञान और औषधि ग्रहण केलन्हिहमरो लोकनि कँ इ शिक्षा ग्रहण करबाक चाही।

आयुशरीर, मन आर आत्मा सँ युक्त पुरुष क नामथिक आर वेद ज्ञान के कही। अर्थात् जाहिशास्त्र सँ पुरुषक ज्ञान हो तकरा आयुर्वेद कही। "आयुर्हिताहितं व्याधेर्निदानं शमनं तथा विधते यत्र विद्वभिः स आयुर्वेद उच्यते।" जे विद्या आयुरहित अहित देखावे व्याधिकनिदान आर नाशक उपाय देखावय से आयुर्वेद

थीक चरक आर सुश्रुत आयुर्वेद नहिं थिक। इनू त आयुर्वेदक शाखा विशेषसँ सम्बन्ध रखनिहार प्रधान ग्रन्थ थीक। आयुक हितार्थ ज्ञान चाहे पश्चिम सँ होचाहेपूर्व सँ सब आयुर्वेदोत्थानक हेतु संसार क प्रत्येक भाग मे जे कोनो उपयोगी ज्ञान भेटत तकरा पक्षपात सँ रहित भय आत्मीकरण करय पड़त। ज्ञान कतौ सँ भेटो पवित्र, आदरणीय आर ग्राह्यथिक। नहि ज्ञानेन सदृशं पवित्रमिह विद्यते।

"म्लेच्छादिभवनास्तेषु सम्यग ज्ञानमिदं स्थितम् ऋषिभिस्तेपि पूज्यन्ते।" वराहमिहिरस्य।

आयुर्वेदक अवनतिक कारण जे पूर्वछल से आबनहिं अछि। शवच्छेद में कोनो बाधानहिं अछि, ने शल्यकोविदक समाज मे उपेक्षा अछि आर राजाज्ञो आयुर्वेदक विरुद्ध नहि अछि। हँ! स्वराज्य भेनौ भारत सरकार द्वारा एकरा पर्याप्त प्रोत्साहन नहिं भेटल अछि; किन्तु प्रत्येक बात पर सरकार पर भरोस कर ब चरित्रबलक दुर्बलताथिक आर अशक्ति के बढ़ौनिहारथिक। वैद्य समाजक कर्त्तव्य थिक जे ओ अपन विद्या, बुद्धि आर चिकित्सा द्वारा जनता काँ अपनाबथि आर जनता भारत सरकार क आयुर्वेदक राजकीय चिकित्सा पद्धति क स्थान देवाक हेतु बाध्य करे। युरोप आर अमेरीका आदि स्वतन्त्र देश में विद्यालय आर चिकित्सालय सरकारक दीश सँ नहिं बनल अछि; ई इनू जनताक दान पर एहन २ अछि जे भारत मे सरकारक साहाय्य रहितौ नहिं भय सकल अछि।

अवनतिक प्रधान कारण जे एखनहु शेष अछि प्राचीन कृति मे परम भक्ति, अन्ध आर दृढ़ विश्वास अछि। यावत पर्य्यन्त ई धारण रहत कि जे किछु प्राचीन अछि ओ सत्यत्तम थिक ओ अत्युत्तम थिक ओहि सँ भिन्न किछु भय नहिं सकैछ तावत पर्य्यन्त उन्नतिक मार्ग अवरुद्ध रहत। मनुष्य क बुद्धि अपार अछि। कालिह नहि ज्ञात छल से आइ ज्ञात भय सकैछ। विज्ञान आर बुद्धि इनू निःस्सीम अछि। सतत् नव विज्ञानक अन्वेषण होइते रहैछ। अतः पक्षपातसँ रहितभय धैर्य आर परिश्रमपूर्वक जतय जेतथ्य भेटय से लय आयुर्वेद मे समावेश कयला सँ आयुर्वेदक उन्नति होएत।

# धर्मशास्त्रविभागः

## १. आर्यसंस्कृतिः

पं० श्रीजगदीशशर्मा दाधिमथः, मं० महाविद्यालय, जयपुरम्

निबन्धेऽस्मिन आदौ तावत केऽमी आर्या का चैतेषां संस्कृति. इति विचार्यते। विविधाना विदुषा सिद्धान्तं सम्यगालोच्य भारतीय-स्मृतिकाराभिमत सिद्धान्त समादधाति।

---

## २. गोपूजानिर्णयः

पं० श्रीजीवनाथझा, जनकपुर, दरभंगा

कार्त्तिकशुक्लप्रतिपदि विहिता गवा पूजा क्रीड़ा च पूर्वविद्धायां वा कर्त्तव्येति विचारे 'प्रतिपदा कुहूर्यत्र गावस्तत्र न पूजयेत्' इत्यादि स्मृतिवचनानाम 'प्रतिपद्दर्शसयोगे गवा वै क्रीडन भवेत्, परविद्धासु करणात्पुत्रदारधनक्षय'। 'प्रतिपद्यग्निकरण द्वितीयाया गवार्चनम् क्षत्रक्षय करिष्येते वित्तनाश कुलक्षयम्' इति वचनानां च परस्परविरोधात् कतर पक्षो ज्यायानिति सन्देहे सर्ववचनजातैक-वाक्यत्वपुरस्सर मप्रमाणो निम्नलिखितनिष्कर्ष सिद्धान्तितो-ऽस्मिन्निबन्धे।

यत्र चन्द्रदर्शनाभावो निश्चितस्तादृशे सौम्यदिने विशाखाऽन्य-नक्षत्रे कार्त्तिकशुक्लप्रतिपदि गवा पूजा क्रीड़ा च कार्य्या। उभयदिने तादृशसमयलाभे तु परदिने सा। उभयोरपि दिनयोस्तादृशसमया-ऽलाभे तु तद्विलोप एवेति।

---

## ३. धर्मव्यवस्था

पं० श्रीरमाकान्तठाकुर, लोहना, दरभंगा

सुखस्यासाधारण कारण धर्म वदन्ति।
आचारहीन न पुनति वेदाः

यद्यप्यधीता सह पड्भिरङ्गै रित्यादिवशिष्ठस्मृत्यनुसारेणाचारं मन्वते।

स च धर्म: पञ्चधा यथा—वर्णधर्म:-आश्रमधर्म-वर्णाश्रमधर्म-गुणधर्म:-नैमित्तिकधर्म इति। एवमाचारस्य प्राधान्य सर्वथा सिद्धयति। आचारोहि कर्मणामसाधारणो हेतु।

न चैव शूद्रजातीयानामपि कर्मणा ब्राह्मणत्वं स्यादित्याधुनिकसुधारवादिनां मतं साध्विति वाच्य-चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागश: इतिभगवद्वाक्यविरोधात्।

विश्वामित्रदृष्टान्तेन नीचजातीनामुच्चजातित्वं नैव भवितुमर्हति यतश्चातुर्वर्ण्यं जन्मसिद्धमेव न तु कर्मकृतम्।

'कलौ ब्राह्मणता वीर्जात्तपश्चर्यादिना नहि' इत्यादि कौशिकसंहितोक्तिविरोधात्। किं च पश्य मे तपसो वीर्जं स्वार्जितस्य नरेश्वर।

एष त्वां स्वशरीरेण नयामि स्वर्गमोजसा॥

इत्यादि रामायणोक्त्या तदयोग्यत्वात्। विश्वामित्रस्य ब्रह्मतेजस एवोद्भवाच्च। स चाचार सश्चासावाचार, सतां वाचार सदाचार इत्याह मनु। यश्चाधुना सुधारका: ब्राह्मणक्षत्रियवैश्यशूद्राणां परस्पर धर्मव्यत्यास कारयित्वा विवाहादिसंस्कार कारयन्ति किं बहुनाऽस्पृश्यान् स्पृश्यांश्च कुर्वन्ति तदसांप्रतम्—

येनास्य पितरो याता येन याता पितामहा।
तेन यायात्सतां मार्गं तेन गच्छन्नरिष्यते॥
इत्यादि मन्वादिवचनविरोधात्।

अथ 'पण्ये यच्च प्रसारितम्' इति सिद्धवचोऽभिलप्य पण्ये प्रसारित भक्ष्य म्लेच्छादिना साक्षात्स्पृष्टमपि गृह्णन्ति बहवस्तन्न युक्तं—

पण्ये प्रसारितं भक्ष्य सजातदुष्टशंकाया न त्याज्यं किंतु साक्षादस्पृश्यजातिस्पर्शादिदूषित त्याज्यमेव, कलौ तु केवल कर्त्ता फलभुक् पुण्यपापयोरितीयानेव कलौ विशेष:।

विहितकर्माणि अकुर्वन निन्दितानि च तानि समाचरन् शास्त्रोक्तप्रायश्चित्तानुष्ठानं विनाऽध पतति लोक। अत एवाचारस्य प्राधान्य दर्शित कर्मण: श्रेयस्त्वमपि तदधीनत्वादित्यत्र समेषामैकमत्यम्। न सीदन्नपि धर्मेण मनोऽधर्मे निवेशयेदित्यादि मनुरीत्या विहित कर्म ह्यनुतिष्ठन् धनाद्यभावेन सीदन्नपि कदाचिदप्यधर्मे बुद्धिं न कुर्यात्।

अथ दशविधसंस्कारकर्मणां विवाहस्यादिकर्मण प्राधान्यात् स्त्रीणां विवाहकाल निर्णेतु विवदतां केचन द्वादशवर्षादारभ्य षोडशवर्षावधि विवाहकालमिच्छन्ति तन्न युक्त विवाहकालनियमे विवाहस्य केवलमैहिकफलत्वाभावात्। मनुरीत्या स्त्रीणां विवाहस्योपनयनस्थानीयत्वेन ब्राह्मणस्योपनयने हि पचमाब्दादधिकारस्य सर्वसम्मतत्वेन स्त्रीणा विवाहकालनियमे तथाधिकारस्य सर्वसम्मतत्वात्।

आंगिरो वचसा स्वरसेन पचवर्षमारभ्य दशवर्षपर्यन्त,

पितुर्गेहे तु या नारी रज पश्यत्यसस्कृतेतिबृहस्पतिवचो भीत्या दद्यादूगुणवते कन्या नग्निकां ब्रह्मचारिणे, इति बौधायनवच स्वरसेन च रजस्वलादानस्य निषिद्धत्वात्।

त्रिशद्वर्षोद्वहेत्कन्या हृद्या द्वादशवार्षिकीमित्यादि मनुरीत्या पचमाब्दादारभ्य द्वादशवर्षपर्यन्त कन्यादानस्यावश्यकत्व न तु ततोऽनन्तरमितिसिद्धान्त ।

तच्च दान-सकृदशो निपतति सकृत्कन्या प्रदीयते। इति मनुरीत्या दत्तायाः कन्याया पुनर्दान परस्य चेत्याद्युक्त्वा—

इमान्धर्मान् कलियुगे वर्ज्यानाहुर्मनीषिण इत्यादिकमलाकरभट्टरीत्या च सकृदेवात स्त्रीणां पुनर्विवाहो निषिद्ध ।

अथ 'एकशाखां समारूढश्चाण्डालादिर्यदा भवेत्।

ब्राह्मणस्तत्र निवसन् स्नानेन शुचितामियादित्यादिवचनेभ्योऽस्पृश्याना जातितोऽस्पृश्यत्व कूपोदकस्पर्शेऽनधिकारत्व च सिद्ध्यति। चण्डालैरन्त्यजैश्चैव तथान्यप्रतिलोमजैरित्यादि भृगुसहितोक्त्या देवालयप्रवेशे तेषामनधिकारत्वं पर्यवस्यति।

प्रतिलोमान्त्यजादीना स्तूपि दृष्ट्वा समाचरेदित्यादिसिद्धकथनदर्शनात् ब्राह्मणानां कृते शास्त्रे पक्षपात इतिवादिनो निरस्ता ।

तत्र युक्तिप्रदर्शनपूर्वक च ब्राह्मणजातिपक्षपातिनो महर्षय इति मत साधु परास्तमिति दिक्॥

## ४. अहिंसा

### श्रीएस० के० गुप्त, देहली

कांश्चिद् विदुषो विहायान्ये जना अहिंसाशब्दस्यार्थं नाव गच्छन्ति, अपि तु अनर्थं गृह्णन्ति येन देशस्य महती क्षतिर्जाता, जायते च। साहित्यसभ्यतासंस्कृतिभ्य एवास्यार्थस्यावगमः। हिंसिधातोः सिद्धो निषेधने समस्तश्च। निषेधस्तु द्विविधः—प्रसज्यप्रतिषेधः पर्युदासश्च। 'अब्राह्मण' इत्यत्र 'अमुक्ता' इत्यत्र च नञो ब्राह्मण-मुक्ताभ्यां समासो विहितस्तस्मात्, नञोऽप्राधान्यं, ब्राह्मणमुक्ता-शब्दयोश्च प्राधान्यं भवति। अब्राह्मण इत्यस्यार्थश्च 'ब्राह्मणभिन्नः परं तत्सदृशः क्षत्रियवैश्यादिपुरुषो' भवति।

एवमहिंसापदेऽपि नञो हिंसनक्रियया समासः कृतः। अत्रापि पर्युदासो नञ् एव। तस्मात् निषेधस्याप्राधान्यं हिंसाया इति विधेश्च प्राधान्यं स्वतः सिद्धमेव। अर्थश्चास्य हिंसाया भिन्नं परं हिंसासदृशं कर्म' इत्येव सम्भवति। तस्मात् शत्रूणां वधोऽपराधिनां दण्डश्चापि अहिंसा।

साहित्यमप्येवमेवाह। योगदर्शनस्य व्यासभाष्येऽपि एवमेवा-शयः प्रकाशितो व्यासेन। भोजस्य मतं तु वेदविरुद्धं हेयं च। पतञ्जलिनापि "अहिंसाप्रतिष्ठायां वैरत्यागः" इत्यत्र त्यागशब्देन—'अहिंसाया वैरस्य अभावो न भवति परं तत्पुरुषप्रभावेण तत्सन्निधौ प्राणिनः वैरं जहति' इति स्पष्टमेव प्रकाशितम्। यद्यत्र वैराभावोऽ भविष्यत् तर्हि सूत्रेऽपि 'वैराभाव'शब्दमपातयिष्यत् भगवान् पतञ्जलिः। एवं सति सर्वैः राष्ट्रे शक्तिसंचयः कार्यस्तदा शत्रवः स्वयमेव नश्यन्ति शान्तिश्च सर्वत्र भविष्यति।

## ५. वर्णव्यवस्थाविमर्शः

### पं० श्रीतारिणीशझा, नौगछिया, भागलपुर

वर्णव्यवस्था जन्मना कर्मणा वा शिष्टसम्मतेति विषयेऽद्यत्वे बहुधा महीयासोऽपि विद्वांसो विवदमाना दृश्यन्ते। तत्र गुणकर्म-मूलां वर्णव्यवस्थां मन्तारो जन्मसिद्धां तां मन्वानान् कतिपयान्

दोषानुद्भाव्याक्षिपन्ति । तथाहि वर्णसृष्टिर्जन्मसिद्ध त्यसमीचीनम् । यत सैव सृष्टिर्जन्मसिद्धा भवति यस्या स्वय जगदीश्वरोऽस्ति कर्ता, मनुष्याश्व-गो-मृग-कीटादिवर्णा एव जन्मसिद्धा सन्ति यत एषां प्रवर्तक साक्षात् ईश्वर प्रजापतिरेव । निखिलविश्वमिद परमेश्वरस्य समानम्, समदर्शित्वात । तस्य दृष्टौ या श्रेणि-भारतवर्षस्य वर्तते तदेव स्थान तदेव च महत्त्वम् अफ्रिका, अमेरिका, यूरोपादीतरभूखण्डानामपि विद्यते । यदि मुखबाहूरु-पादेभ्यो भगवता ब्राह्मणादिचत्वारो वर्णा उदपत्स्यन्त, तदाऽन्यदेशेष्वपि तेषां विभाग उपालप्स्यत । पर दृश्यते यत् वर्णत्रयध था, वर्णभेद, धर्मभेद, तत्प्रतिपादकमन्वादिशास्त्राणि केवल भारतवर्षस्यैव पैतृकधनायन्ते । नैव केवलम्, अपि तु भारतीयशास्त्राणि भारतेतर-देशान् 'म्लेच्छदेशान्' आचक्षते, तत्र गमनागमनयो प्रायश्चित्तमपि विदधति । तेषा धर्माणि परधर्माणि मन्यन्ते । कि ते देशा ईश्वरीयसृष्टिर्बहिर्भूता सन्ति ? कि तत्रत्यजनसमाज ईश्वरस्य मुखाद्यङ्गेभ्यो नोत्पन्नोऽस्ति ? यदि मनुष्यमात्र वा प्राणिमात्र वा तस्यैव सन्तति, तर्हि सर्वत्र समरूपेण वर्णविभाग कथान्नाभूत ? इमान्येव खलु कारणानि द्योतयन्ति यत वर्णसृष्टिर्नामक प्रपञ्चः केवल भारतीय विपश्चितामेव मस्तिष्कस्य परिणाम ।

अथ योनिमूला वर्णव्यवस्थामभ्युपेतार उक्तदोषान् परिहरन्ति । तथाहि । वर्णसृष्टि केवल भारतवर्षस्यैव प्रातिस्विकसम्पत्तिरस्तीति कुतोऽवगत भवद्भि, भवन्तस्तु भारतीयमनुष्येतरमनुष्यान कथयन्ति । वय तु ब्रूम प्राणिमात्रे न केवल प्राणिमात्रेऽपि तु जडपदार्थेऽपि वर्णसृष्टिरिय यथानुरूप विद्यमानास्ति ।

शतपथ ब्रा० ५, ३, ५, १३ 'अभिषेचनीयानि पात्राणि भवन्ति यत्रैता आपोऽभिषेचनीयानि भवन्ति । पालाश भवति, तेन ब्राह्मणोऽभिषिञ्चति, ब्रह्म वै पालाश । नैय्यग्रोधपाद भवति । तेन मित्र्यो राजन्योऽभिषिञ्चति । पद्भिर्वै न्यग्रोध प्रतिष्ठित. मित्रेण वै राजन्य प्रतिष्ठितः । अश्वत्थ भवति, तेन वैश्योऽभिषिञ्चति ।" श्रुतिरत्र पात्रभेदान् दर्शयन्ती तत्तद्वृक्षविशेषेष्वपि ब्रह्मक्षत्रविड्वीर्याणां भेदेन अवस्थिति सूचयति । ऋषयो न हि वर्णसृष्टि चक्रिरे । अपितु वर्णव्यवस्थां विदधिरे । अर्थात् गर्भाधानादिश्रौतस्मार्तसंस्कारविशेषैः तद्वर्णबीजं पुष्पितं पल्लवितञ्च व्यदधुः । स्थूलभूतवादस्यैव प्राधान्यं

मन्वानाः पाश्चात्या देशा वर्णसृष्टेर्मूलरहस्यज्ञाने असमर्थाः । न तत्र वर्णव्यवस्थां सुव्यवस्थिता चक्रुः ।

## ६. विश्वेश्वरस्मृतिः

### महामहोपाध्यायः पण्डितविश्वेश्वरनाथ रेउः (जोधपुर)

सभवेन्नाम मनुस्मृतेः प्राचीनतमत्वं सर्वमान्यत्वं च कादाचित्कम्। परमिदानीं तु परिवृत्ते समये तदनुसाराचार-पालनं महतामप्यसंभवं संजातं साधारण-जनानां तु तत्र कथैव का ? ।

भिन्न-भिन्नासु स्मृतिषु तु मतभेदाः सन्त्येव परमेकस्यामपि स्मृतौ नास्ति तेषामभावः । समयपरिवृत्त्या च तदानीन्तना बहव आचारा अप्यमान्यीकृताः समाजेन । यदि सावधानं मर्मालोच्येत, तर्हि प्राचीन-महर्षिनाम्ना प्रख्याताः स्मृतयोऽप्यर्वाचीना एव प्रतीयन्ते । तथैव स्मृतिषु स्थलविशेषेषु प्रक्षिप्तानि मतान्यप्युपलभ्यन्ते ।

पुरा तु बलात्कारेण छलेन वा त्याजितधर्माणां विधर्मधर्ममनुप्रवेशितानां वार्याणां न कोऽपि कुत्रापि शुद्धिमार्गोऽलभ्यत । परमष्टम्यां शताब्द्यां यदा सिन्धुसौराष्ट्रयोः आरब्याणां सपर्केणेदृशो विधर्म-विप्लवोऽन्वभूयत, तदा प्रतिभाशालिभिर्देवलस्मृतिं निर्माय बलच्छलादिभिर्विधर्मीकृतानां स्त्रीपुंसानां पुनरार्यत्वप्राप्तये शुद्धिर्निर्दिष्टा । किं बहुना बलात्कारेण विधर्मिभिः परिणीतानां नाशितसतीत्वानां सञ्जनितगर्भाणां वा आर्यवनितानामपि शुद्ध्या स्वपरिवार-प्रवेशोऽनुमतः ।

यावदेकादशीं शताब्दीमाद्रियते स्म च तदेतन्मतं तस्याः स्मृत्याः । अलबिलादुरीनाम्न आरब्यस्य लेखेनाप्यस्य समर्थनं भवति, तेनाऽस्ति लिखितं यदष्टम्यां शताब्द्यां मौहम्मदानां शासनशक्त्या साकमेव धार्मिकी शक्तिरपि क्रमशः क्षीयते स्म । यतो मुसलमानीभूता बहवो हिन्दवोऽनुप्रविष्टाः पुनर्हिन्दुधर्ममिति । महाराष्ट्रे शिवाजी-महोदयस्तु अष्टादश्यां शताब्द्यामपि मौहम्मदधर्मप्रविष्टं स्वसामन्तं निम्बालकरं शोधयित्वा स्वीयां कन्यां विवाहितवान् । एतेषां विषयाणां विमर्शेन विज्ञायते, यद् भारते समये समये युगानुरूपाः स्मृतयः प्रणीयन्ते स्म । याज्ञवल्क्यस्मृतावपि विंशतेः स्मृतीनां नामनिर्देशेनाप्यस्यैव विचारस्य पुष्टिर्जायते । किन्तु दुर्भाग्यवशाद्

द्वादशशताब्दीतो युगानुरूपस्मृतिरचनाकार्यं शिथिलतामापन्नं दृश्यते। अत एव हन्त! अधुनैतत्परिणामस्वरूपं भारतविभाजनम्। परमद्य तु पूर्ववङ्ग-प्रवृत्तैरत्याचारैर्दोदूयमानमनसां वाराणसेयविदुषां भिन्न-भिन्नपीठाचार्याणां च चेतांसि पुनर्जागरणोन्मुखानि विभाव्यन्ते, यत्तैरेतादृश धर्मपरिवर्तनं सर्वथाऽमान्यमुद्घोषितम्।

अयं जनोऽप्यतीताद् वर्षसप्तकात् पूर्वं स्मृत्युक्तानां धर्माणां युगानुरूप-व्याख्यानभावनया प्रेर्यमाण समारब्धवान् विश्वेश्वर-स्मृतिनामानं निबन्धम। समापितवांश्चैन गते वत्सर एवेति। भागद्वय खल्वस्य विद्यते। द्वादशभिरध्यायैर्विभक्ते प्रथमे भागेऽनुष्टु-भामासन्नेनैकादशशतेन मनुस्मृति-कथितानामाचारविचाराणां कारण-निर्देशपुरस्सरं युगानुरूपं व्याख्यानं विद्यते। त्रिंशदध्यायात्मके द्वितीये भागे पुन शताधिकेनाऽनुष्टुप्-चतु सहस्रेण विवेचितवान् अविकल-मार्यदायभागम। अनन्तरोक्तेऽस्मिन विभागे यथास्थल पूर्वं स्मृति-प्रोक्ता व्यवस्था, ततो भारतवर्षस्य विभिन्नप्रान्तेषु व्यवह्रियमाणानि तत्तद्-व्याख्यानानि, तत्तद्विषये प्रधानन्यायालयानां मतोल्लेखनानि च विशदीकृतानि। युगेऽस्मिन् प्राचीनस्मृत्यादिग्रन्थोक्तानां दायनिय-मानां परिज्ञानमात्रेण न कोऽपि विद्वानिदानीतनेषु न्यायालय-विधानेषु चञ्चु प्रवेशमर्हति, तस्य सिद्धहस्ततायास्तु कथैव का?

संस्कृतवाङ्मये युगानुरूपस्यैतादृशस्य ग्रन्थस्य सर्वथाऽभाव-मनुभवतानेन जनेनाऽयं निबन्धो निर्मित। आशास्ते चाय यच्छान्तहृदया सहृदया सविमलविचार परिशील्यैन स्वस्वामनुमति प्रदास्यन्ति।

पुरातन मानवधर्ममेव सम्यक् परिष्कृत्य युगानुरूपम्।
विश्वेश्वरेणात्र कृते प्रयत्नेऽत्यावश्यको विज्ञ-सुदृष्टि-पात ॥

इत परमस्य ग्रन्थस्योभयभागगतानि कतिचित् पद्यान्युदाह्रियन्ते

## विश्वेश्वरस्मृतिः

### (प्रथमो भागः)

अतोऽधीतानुभूताना स्मृत्या सार निवेदये।
विश्वेश्वरस्मृतिरिति नाम्ना य ख्यातिमेष्यति ॥
सस्कृतेः स्वच्छतायाश्च शुद्धेर्वा पैतृकासृज.।
समाजसुखशान्त्योश्च रक्षार्थ मनुना तु यत् ॥

ऋषिभिश्चापरैरुक्तं स्वस्वशास्त्रेषु तन्मया।
विश्वेश्वरस्मृतौ सार्थं वर्ण्यते युगसंगतम्॥
ब्रह्मणस्तु समुत्पन्नं जगदुक्तं पुरातनैः।
नव्या विद्युत्कणोत्पन्नं मन्यन्ते तदसंशयम्॥
सांख्ये पुरुषसांनिध्यात् प्रकृतिः सृष्टिकारणम्।
तथा धनऋणाणूनां सांनिध्यं नूतने मते॥
प्राच्यपाश्चात्यभावानां संघर्षे समुपस्थिते।
युगानुरूपिणीं व्याख्यां विना धर्मस्तु हीयते॥
अमीविकीर्णतापांशगाढनीहारनिर्मितम्।
सूर्यस्य मण्डलमिदं जातं जीवनतापदम्॥
तस्माच्च निर्गतान्यन्ते नवपिण्डान्यथ क्रमात्।
अष्ट ग्रहाश्च नवमं भूमिमण्डलमद्भुतम्॥
यथा तु द्विजपादानामुपेक्षा हानिदा मता।
समाजपादभूतानां शूद्राणामपि सा तथा॥
देशकालादिभिर्धर्मे स्वभावाज्जायतेऽन्तरम्।
सूतेऽनवस्था तच्चेन्नो तत्तदर्थं कलिं त्यजेत्॥
भोजनं जीवनार्थेऽत्र भोजनार्थं न जीवनम्।
मिताहारी भवेत्तस्मादधिकाल्पं परित्यजेत्॥
यदात्मनो न रुचितं तत्परेभ्योऽपि वर्जयेत्।
एष एव सदाचारः सर्वधर्मानुमोदितः॥
परस्परं हि सन्तुष्टौ दम्पती सुखमाप्नुतः।
तत्त्यजेतामसन्तोषं निश्शेषक्लेशकारणम्॥
स्पृश्याऽस्पृश्यव्यवस्थापि निर्मिता स्वास्थ्यहेतवे।
अतस्तथ्यं विचार्यैव कार्योऽस्मिन् निर्णयो बुधैः॥
कलुषीक्रियते देवस्तीर्थं वाऽन्त्यस्य दर्शनात्।
स्पर्शनाद्वाऽपि नैतत्किं धर्मशास्त्रविडम्बनम्?
आर्यधर्मानुगस्त्वन्त्योऽस्पृश्यः किन्तु परिग्रहात्।
अनार्यस्यात्र धर्मस्य स्पृश्य, किं न विडम्बना॥
अगृहीतकरो राजा क्षीणकोशबलो भवेत्।
अतिग्रहणतश्च स्याद् हीनराष्ट्रबलस्त्वसौ॥
बलात्कृतानि कार्याणि कारितान्यथवा जनैः।
अकृतान्येव जानीयाल्लोके न्यायरतः सदा॥

यद्वत्पतिव्रता शस्ता तद्वत् पत्नीव्रत पुमान ।
अत पत्न्यां तु जीवन्त्यां नोद्वहेदपरां स्त्रियम् ॥
स्त्रीणां पुनर्विवाहाज्ञा विरलैवोपलभ्यते ।
तथापि गर्भघातेभ्यो विवाहस्त्वल्पहानिकृत् ॥
चण्डालादीनपि नरो मनुष्या इति चिन्तयन् ।
तिरस्कुर्यान्न लोकेऽस्मिन् शूद्राणां तु कथैव का ॥
प्रलोभनाद् बलात्काराद् मदादज्ञानतोऽथवा ।
म्लेच्छीकृतोऽनुतप्तश्चेन प्रायश्चित्तैर्विशुध्यति ॥
अनावृत्त प्रतिज्ञान पश्चात्ताप कृतस्य च ।
व्रतादिक च दान च प्रायश्चित्ते विधीयते ॥
निराकारपरब्रह्मध्यानेऽशक्तास्तु ये जना ।
तेषा कल्याणसिद्ध्यर्थमेव मूर्ति प्रवर्तिता ॥
अतो देवस्य कस्यापि निर्मायात्मप्रियाकृतिम ।
ध्यानाधारतया ध्यायेन पूजयेद्वाथ भक्तित ॥
किन्त्वन्यस्य प्रिया मूर्ति नवमन्येत जातु यत ।
सर्वदेवनमस्कारो ब्रह्म प्रत्येव गच्छति ॥

## द्वितीयो भागः

### व्यवहाराधिकारः

विश्वेश्वरस्मृतेरेवोत्तरार्धस्य स्वरूपत ।
भारतीयार्यजातीयो व्यवहारो विविच्यते ॥
चातुर्वर्ण्ये समुत्पन्नास्तन्मताऽनुगताश्च ये ।
प्रत्यावृत्ताश्च ये तस्मिन तदर्थ विधिरुच्यते ॥
वाराणस्यां महाराष्ट्रे विदेहे द्रविडे तथा ।
मान्या मिताक्षरा नित्य प्रान्तिकाचारमिश्रिता ॥
वाराणस्यां तु मान्यौ स्तो द्वावेतौ हि तया सह ।
वीरमित्रोदयस्त्वाद्योऽपरो निर्णयसिन्धुक ॥
महाराष्ट्रेऽपि पूर्वोक्तावुभौ मान्यौ तया सह ।
व्यवहारमयूखश्च मुख्यो यो गुर्जरे ध्रुवम् ॥
विदेहे तु तया सार्ध मान्यौ स्तो 'वि'-समन्वितौ ।
वादचिन्तामणि पूर्वो वादरत्नाकरोऽपरः ॥

द्राविडेऽथ तया सार्धं मान्या ग्रन्था इमे बुधैः ।
सरस्वतीविलासोऽथ वीरमित्रोदयस्तथा ॥
पाराशरो माधवीयस्तथा च स्मृतिचन्द्रिका ।
एषा न्यायविधौ ज्ञेया प्रान्तीया शास्त्रमान्यता ॥
वङ्गे पुनर्दायभाग सर्वैरादि्रयते बुधैः ।
अतो विधीना मुख्ये द्वे व्यवस्थे भारते मते ॥
दायप्राप्त्यै तथा पृक्तकुटुम्बार्थं विनिश्चिता ।
मिताक्षरीया नियमा दायभागेऽन्यथा कृता ॥

## ७. अशौचविचार:

### पं० श्रीगोकुलानन्दझा, मङ्गरौनी, दरभंगा

अथ दशाहाशौचसर्ववर्णसाधारण्ये न विहितमस्ति 'तेन शूद्रस्यापि प्राप्नोति मासिकाशौच तस्य प्रातिस्विकरूपेण विहितमस्ति । तदनयो समुच्चयो न सम्भवति आचारविरोधात । किन्तु विकल्प सोऽपि नैच्छिक: । गुरुकल्पप्रतिपादकशास्त्रस्याननुष्ठानलक्षणप्रामाण्यप्रसगात् । किन्तु व्यवस्थित । अत एव कतिपयशूद्रकुले दशाहाशौच परम्पराप्राप्तमस्ति । कतिपयशूद्रकुले मासिकाशौचम् । ते यदि मोहाद्दशाहाशौचमाचरन्ति सदा पतन्ति विहिताननुष्ठानान्निषिद्धसेवनाच्च । स्थलविशेषे कल्पविशेषस्य परिग्रहस्तदितरकल्पस्य निषेध इत्यस्यैव व्यवस्थितविकल्पपदार्थत्वात् । अत एव जातिदेशकुलानाञ्च ये धर्म्मा प्राक्प्रकीर्त्तिता: । तथैव ते पालनीया प्रजा प्रक्षुभ्यतेऽन्यथेत्यादिक स्मर्यते । एतेनानादिपरम्पराप्राप्ततत्तद्धर्म्मपरित्यागो व्याख्यात । यद्यपि पुरुषविशेषकल्पितधर्म्मस्याविचालनीयत्व मन्वादौ स्मर्य्यते तथापि तद्राजनीतिपरम । धर्म्मान्तरे हस्तक्षेपस्तु अनाधिकारचेष्टितमेवेति ।

---

## ८. सापिण्ड्यनिर्णय:

### पण्डित श्रीतुलानन्दशर्म्मा, लखनौर

सापिण्ड्यनिर्णये सापिण्ड्यपदव्युत्पत्तिरत्र पिण्डपद शरीरपर सप्तान्यतमत्व सपिण्डपदशक्त्युपाधिरेवञ्च सप्तान्यतमत्वावच्छिन्नैक-

शरीरान्वयित्व सापिण्ड्यमपरस्मिन्पक्षे पिण्डपदं पितृयज्ञीयपिण्डपरमेवञ्च सप्तान्यतमत्वावच्छिन्नसाक्षात्परम्परासाधारणैकपिण्डान्वयित्व सापिण्ड्यमेवञ्च बीजिनमारभ्य सप्तमपुरुषपर्य्यन्त सर्व्वेषा सन्तानाना सन्तानिनाञ्च परस्पर सापिण्ड्य एकस्यापि सप्ताधिकत्वे सप्तान्तार्गतस्यापि सापिण्ड्य विनिवर्त्तते सयोगवदुभयनिरूप्यत्वादिति महामहोपाध्यायवाचस्पति मिश्रादीनाम्मत महामहोपाध्यायनरहरिणा खण्डित तत्खण्डनस्य मण्डनम ।

---

## ६. मिताक्षरादायभागयोर्विषये किञ्चित्

### पं० श्रीविनायकशास्त्री, इन्दौर

सर्वत्रा विदितमास्त सम्प्रति भारतीयन्यायाधिकरणेषु स्वत्वविषये मिताक्षरा—जीमूत—वाहनयोर्मतद्वय वङ्ग-तदितरभारतयोर्व्यवस्थापितमिति ।

हिन्दूविधिसमित्या च नियमानामैकरूप्यादिहेतुभि मिताक्षराकृतजन्मस्वत्वसिद्धान्तमुध्दूय सर्वत्र भारते वङ्गीयमुपरमस्वत्वमेव प्रतितिष्ठापयिषितम ।

तत्र मीमासान्यायाभ्युपेतप्राचीनधर्मशास्त्रप्रसिद्धयाद्यनुरोधेन, अशतश्च सम्भवदैकरूप्यानुकूल्येन, हिन्दूना कुटुम्बव्यवस्थारक्षणदृष्ट्या च आग्लन्यायाध्यक्षस्वीकृतसाम्प्रतिकदेशविशेषपक्षापेक्षया विशेषानुसारेणानयो पक्षयो व्यवस्थाऽस्मिन्प्रबन्धे प्रकारत्रयेण ससूचिता ।

तद्यथा—

१ तस्माद्धने प्रातिबन्ध्यमूले स्वत्व न जन्मना
कौटुम्बिके तु पुत्राणा स्वामित्व जन्मना भवेत् ।
२ पित्रर्जिते पितु स्वत्वोपरमात्तनये स्वता
पितामहोपार्जिते तु पितु. पुत्रस्य चास्त्वसौ ।
३ पित्रर्जिते स्थावरेऽस्तु पुत्राणां जन्मना स्वता
स्थावरेतरवित्ते तूपरमात् स्वत्वमर्हति ॥ इति ॥

## १८. ब्राह्मणवृत्तिः परिवर्त्तनमपेक्षते

### पं० श्रीलक्ष्मीनाथमिश्र, रसलपुर, भागलपुर

पुरा जगदिदं सृजता विश्वसृजा मनुजा एवान्येभ्यो जीवबद्भ्य श्चैतन्योपचिता कृता, वर्णा आश्रमाश्च प्रकल्पिता, तेषां रक्षार्थं सामान्य-विशेषधर्माणां च प्रतिपादनायाऽत्मभूर्मनुरन्वरोधि । स च भगवान् ब्रह्मावर्त्ते परमपुरुषामृतस्यन्दिनी कथा धर्मतत्त्वानि च मरीच्यत्रिभृग्वादिभ्य शिक्षयन् वसुधामगोर्पीत् । ते च महर्षयस्त-त्परवर्त्तिनश्च मुनयो जगतां हिताय वर्णाश्रमक्रमेण चतुर्वर्णाना धर्मानाचारांश्च प्रत्यपादयन् । स चाचारो धर्मश्च देशकालवशाद् भिद्यते परिवर्तनञ्चापेक्षते । दृष्टश्चाचार परिवर्त्तितो युगक्रमेण । ब्राह्मणस्य यानि षट् कर्माणि मनुनान्येन वा मुनिना प्रोक्तानि न तै. साम्प्रत ब्राह्मणा जीवितु पारयन्ति । पुरा भारते ब्राह्मणाना राजा आश्रय आसीत्, केचित तेषां सांनिध्य भजमाना राजभ्यो भूभागोपहार लब्ध्वा, अन्ये पुनर्निजानवद्यविद्याकौशलेन सन्तोष्य तेभ्यो भूपतिभ्य समादाय भूभागोपहारमवनिपालकल्पा भूस्वामिन जाता. , इत्यनया गत्या तेषा भूसुराणा जीविकापरिवर्त्तनसूत्रमपतत् । तत्परं कियन्तो ब्राह्मणा कृषिवृत्तिमप्युरीकृत्य वैश्यवृत्तिवर्त्तिन्या प्रासरन् । एव क्रमेण बहुविधा सदृशीमसदृशीञ्च वृत्तिमाश्रयन्तो ब्राह्मणा बहुमुखपथ प्रस्थिता ।

स्वराज्ये समायाते भारतीयाना काचिदुचिता स्थिति. स्यादित्या-शापि शिथिलायत एव । किञ्चेदानीं राष्ट्रीयमहासभावादिनाम्, समाजवादिनाम्, हिन्दूमहासभावादिनाञ्च मल्लाना परस्पर—विवादेनाकुलिता लोका रसातलात्परस्मिन तत्तद्वादिविनिर्मिते तले-ऽपुनरावर्त्तनस्थिति गन्तुमुद्यता दृश्यन्ते ।

अतर्किते अस्मिन् क्रान्तिकालेऽनवधानतया महती हानिः सम्भाव्यते ब्राह्मणानाम् , तेनाविलम्बितमेव तै सावधानै प्रतीकार-परैश्च भवितव्यम् । कृषिप्रधानेऽस्मिन भारते कृषिप्रधानजीविकोपा यानां हालिक विना महदसौकर्य घटते, हालिका हि नर्माधिकवेतन-दानेऽपि न तुष्यन्ति, इह ब्राह्मणा अधिकवेतन वितरन्त. स्वय व्ययाधिक्येन स्वल्पायेन च प्रत्यह दुःस्थिति श्रयन्ते, हालिकाश्च नित्यमान्दोलय त कार्य विघटयन्ति समुचितकृषिकृतिसमये ।

तस्मादवहितेन मानसेन प्रज्ञावद्भिर्विचारणीय वर्त्तते यत् 'समय मनुरुध्य ब्राह्मणवृत्तिषु परिवर्त्तनमपेक्षते न वा ?" अधुनातना ब्राह्मणा याथातथ्येन शास्त्रोदितां वृत्तिमेवाश्रयन्तो न जीवन्ति। अनापदि मनुनापदि च मनुना गौतमेन बौधायनेन पराशरेण च यानि कर्माणि ब्राह्मणानामुक्तानि तेषु कर्षणमपि वृत्तित्वेन कथितम्। आपद्यपि यानि कर्माणि गर्हितानि तान्यपि सम्पादयन्ति ब्राह्मणा साम्प्रतम्। देशकालमनुरुध्य सदाचारस्य धर्मस्य च सदैव परिवर्त्तन स्वीकृत दृश्यते।

## ११. विधवाविवाहयुक्तायुक्ताविमर्शः

पं० श्रीगंगालालझा, बेगूसराय

न च नष्टे मृते प्रव्रजिते क्लीबे च पतिते पतौ। पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते ॥ इति पराशरस्मृतिवचनेन मृतेपि पत्यौ विवाह इतिवाच्यम्। यतो अत्र पत्यौ पताविति नास्ति किन्तु अपताविति। एङ पदान्तादति इति पूर्वरूपमत्र नहि केवल पतिशब्द घीसञ्ज्ञाभाक् तस्य समास एव घीसञ्ज्ञाविधानात ॥ नच द्रौपद्या पञ्चपतित्वदर्शनेन सहानेकपतित्वशङ्काया श्रुतेरप्रमाण्यतापत्तिरिति वाच्यम्। यत एतच्छास्त्र मनुष्यानधिकरोतीति श्रीशंकराचार्यादिशारीरकभाष्यस्थवचननिर्देशात तादृशविधीना मैथुनयोनिकृत एव विधानात् ॥ मार्कण्डेयपुराणे चतुर्थाध्याये पक्षिराजजैमिनिमुने सम्वादेपि दृश्यत एव।

# ज्यौतिषविभाग

## १. आयुर्विचारः

### पं० श्रीकमलाकान्तझा, मडुकिया, दरभंगा

दीर्घमध्याल्पभेदेन त्रिविधायु कक्षाकथनपूर्वकमहर्षिजैमिनिमतेनायु साधन करणम्" ततो ग्रहस्थानजनित—देहतातनिधनाधिया इत्यादि कथनतो ह्यायुर्निर्णयकरण जैमिनिप्रतिपादितखण्डनिश्चयपूर्वकपराशरप्रतिपादितमारकेशग्रहनिर्णयपूर्वकायुर्निर्णय, देवशालमतेनाष्टवर्गायुस्साधन तत्रैव त्रिकोणैकाधिपत्यशोधनप्रकारोपपादनम्, ततो नियत-परमामितायु प्रतिपादनपूर्वकआंकुशसत्याचार्य्यप्रतिपादिताशायुर्दाय नैसर्गपैण्ड्य-जैवायुर्दायाना साधनपूर्वकगणितायुर्निश्चयकरणम।

## २. वृष्टिविचारः

### पं० श्रीकमलाकान्तझा, मडकिया, दरभंगा

मनुष्यादिकगर्भ-गर्भस्राव प्रसवधन्मेघकर्तृ कर्तृत्वेऽपि तादृत्रकम्भवति। ततो गर्भसमय कदा कथञ्चेति निर्णय, पवनसलिलविद्युद्गर्ज्जनमेघा इति पञ्च निमित्तानि सन्ति, गर्भसमये हस्तमात्रदैर्घ्यविस्तारोच्छ्रितिधातुघटितकुण्डे पञ्चविंशतिपलाधिकवृष्टिजले गर्भाभावत्वनिर्देशप्रतिपादनम, २५ पलाल्पे वृष्टिजले गर्भस्थिरता, गर्भसमये-गर्भपुष्ट्यपुष्टिकरशुभाशुभलक्षणकथनम्, पाक्षिक-मासिकगर्भनिश्चय, गर्भसमयोत्थमेघादि विपर्य्ययत्व प्रसवकाले भवति, १९५ दिने प्रसवनिर्णयो गर्भस्य, प्रतिमासिकशुभाशुभलक्षणानि, नक्षत्रविशिष्टगर्भतो वर्षानिर्णय, वर्षाजलप्रमाणकथनम्, वर्षाङ्कितयोजनात्मकप्रदेशनिर्णय, पौषे मूलादिभरण्यन्तनाक्षत्रिकगर्भवशेन वर्षानिर्णय, पौषादिमासचतुष्टयोत्थमेघादिना वर्षानिश्चयाभिधानम्, ज्येष्ठाषाढमासयोर्नक्षत्रोत्थतिथिजगर्भनियमाद्वर्षानियम, वर्षाजलप्रमाणकथनमपि तत्रैव लिखित-

मस्ति, आषाढ़े रोहिणीयोग-स्वातियोग-आषाढ़ीयोगेभ्यो वर्षानिर्णयकरणम्, रोहिणीयोगदिने कुम्भस्थापनवशादपि वर्षानिर्णयत्वप्रतिपादनम, आषाढ़शुक्लनवमीदिने सूर्योदय-मध्याह्नसायाह्नकालिकसूर्यबिम्बावलोकनवशात्कार्त्तिकवर्षाशुभाशुभत्वप्रतिपादनम, आषाढ़पूर्णिमायां कूप-निर्झर-सरसां जलमापनादितो वृष्टिनियतिकरणम्, रोहिणीनिवासस्थानजन्यवर्षाशुभाशुभत्वम्, आषाढ़ीपूर्णिमायां वायुवशाद्वृष्टिनिश्चयकरणम, नक्षत्रस्त्रीपुरुषनपुंसकाभिधानपूर्वकसूर्यसञ्चारदिवसीयस्त्रीपुरुषादियोगतो वर्षानिश्चय, चण्डादिसप्तनाडीविवेकतो वर्षानिर्णय नाडीस्थग्रहयोगाद्वृष्टिदिनप्रमाणप्रतिपादनम, ग्रहस्थितिवशेनापि वर्षानिर्णयकरणम ॥ एतत्सर्वं विशेषविवरणद्वारा ऽवलोक्यम । इतिदिग्दर्शनम ।

## ३. सायननिरयणतारतम्यम्

पं० श्रीलक्ष्मीकान्तझा, सूरत

ज्यौतिषशास्त्राङ्गोद्भव पञ्चाङ्गमेव सर्वधर्माणां मुख्यतममङ्गमिति निश्चित्य, तन्निर्माणे सहायभूतानां भारतीयसिद्धान्तग्रन्थानां नामोट्टङ्कनपुरःसर तत्रत्य तथ्यातथ्यविवेचन कृत्वा, श्रीसूर्यसिद्धान्तोद्भव गणितं तदनुसारि करणग्रन्थोद्भव गणित वा पञ्चाङ्गरचनोपयोगि भवेन्नान्यदिति दर्शयित्वा सिद्धान्तोपपत्त्या युक्त्याच नवीनमतखण्डनपूर्वक प्राचीनमत संस्थाप्य, अयनांशानां पार्थक्य दर्शयित्वा, सूक्ष्मायनांशानयनविधि, अयनांशानां वार्षिकदैनंदिनी च गति प्रतिपाद्य, सायनगणनया तिथ्याद्यानयने दोषबाहुल्येन धर्मकृत्याद्यनुष्ठानलोपशङ्कया श्रीसूर्यसिद्धान्ताद्यनुसारिणी निरयणगणनैव सर्वथा समुचितेति सर्व स्फुटं प्रतिपादितमस्मिन लेख इति ॥

---

## ४. ग्रहणविचारः

पं० श्रीलक्ष्मीकान्तझा, सूरत

श्रुतिस्मृतिपुराणप्रतिपादित चन्द्रसूर्ययो राहुग्रहण युक्त्या असिद्धमपि सिद्धान्तप्रतिपादितोपपत्त्या तत्समन्वयन, सिद्धान्तानां मतमतान्तरावलोकनपुरःसरमुपपत्तिनिचय युक्त्या मेलयन्, स्थले

स्थले स्वविचारमपि स्थापयन् , सूक्ष्मरीत्या ग्रहणानयन प्रतिपाद्य ज्योतिषशास्त्रोपरि विश्वासविकाशार्थं च फलितग्रन्थानामाधारतो ग्रहणकालीनभवितव्यतां तत्फलञ्च प्रथमत एव कया रीत्या प्रतिपाद्य-मित्यादिरीतिमुद्घाटयन् , ग्रहणजन्यशुभाशुभफलं सप्रायश्चित्तं शान्ति-विधिसहितञ्चोद्घोषयन् आधुनिक वैज्ञानिकमतमुद्घाटनपूर्वक स्वमतेन सह तत्सामञ्जस्यमुट्टङ्कयन् , वेदाङ्गेषु ज्योतिषशास्त्रस्य सर्वेभ्यो मूर्द्धन्यत्व प्रतिपादितवानस्मीति ।

---

## ५. आयुर्विचारः

### पं० श्रीलक्ष्मीकान्तझा, सूरत

ब्रह्मण प्रथमसृष्टीना देवर्षिब्रह्मर्षिमनुप्रभृतीनामत्रैव जननात्, परमात्मनोशावताराणामत्रैव प्रादुर्भवनात्, वर्णाश्रमधर्म्माणामत्रैव व्यवस्थास्थापनाच्च भारतवर्षस्योत्कर्षता प्रतिपाद्य, तत्रानेकजन्मो-पार्जितपुण्यप्रभावलब्धजन्मनां मनुष्याणा कृते धर्म एवामूल्यं रत्न-मिति दर्शयित्वा, धर्माचरणे आयुष सत्त्वैव प्रधानं कारणमिति निश्चित्य, तद्रक्षणाय वर्धनाय च गत्यर्थक-दानार्थक "इण" 'दा' धातु-भ्या "मायु" "आयुर्दायो" वेति पदद्वय मसाध्य, ( आयुर्जीवितकाल स्यात् परमायुस्तदुच्यते ) इत्यादिप्रमाणैरायुषो जीवितव्याप्यकालत्व-मर्थ विधाय, नीतिशास्त्र-आयुर्वेद-पुराण-धर्म्मशास्त्र-श्रुति-स्मृति योग-शास्त्र-तन्त्र-शास्त्रादिप्रमाणैर्घृतसेवन-ब्रह्मचर्यसात्त्विकाहार - सदाचार-योगासनप्राणायामशुद्धवायुसेवनादिक्रियाकार्य्याद्याचरणैर्धर्ममूलं तदा-युर्वर्द्धेत इति स्फुट प्रतिपादितवानस्मीति ॥

---

## ६. वास्तुविचारः

### पं० श्रीमुक्तिनाथझा, धनकौल

नानाप्रपञ्चात्मकेऽस्मिन वै सुखदुःखमये ससारे सुखोपलब्ध्यै द्वितीयाश्रमप्रविष्टानां सकलमानवानां सुखनिदानभूतं गृहमेव, यतः स्व-गृहकृतश्रौतस्मार्त्त-क्रियोपलब्धपुण्यनिचयेनैहिकामुष्मिकसुखोपलब्धिः परगेहकृतानां तासां निःफलत्वात् यत उक्तं वृद्धगार्गेण "परगेहकृता.

सर्वाः श्रौतस्मार्त क्रियाश्च या । निश्छला स्युर्यतस्तासां भूमीश फलमश्नुते"। तेन गृहकरणस्यावश्यकत्वे तदाधारभूता प्रथम भूमिरेवापेक्ष्यते सा च भूर्नाना विधा प्रशस्ता समा निन्द्या चेति तिस्रो भूमय संसारेऽस्मिन् मानवानां दृग्गोचरीभूता। यत्र भूमावकिञ्चनोपि मानुष कृतगेहो झटित्येव सर्वाभ्युदयं लभते सैव प्रशस्ता भूमि सर्वैर्निगद्यते यत्र गृहकरणे पूर्वाभ्युदयस्यापि झटित्येव विलयो भवति सा निन्द्या भूमिर्निश्चीयते तथा यत्र गृहकरणे पूर्वाभ्युदयस्य न ह्रासवृद्धी सा समाभूमि सर्वैरुररीक्रियते। तेन प्रशस्तभूमिज्ञानमन्तरा सुखनिदानभूतस्य गृहस्य क्वारम्भो युज्यते तदर्थं प्रशस्तभूमिज्ञानाय मानवस्य स्वव्यावहारिकनामराशिवशेन ग्रामस्य यस्यां दिशि वासो विहितस्तस्यामेव दिशि निवासार्थं भूमि परीक्ष्या किन्तु परीक्षणे निवास्यक्षेत्रस्योपरितनभागदर्शनेन तथा शिवावलिविधानेनैवं भूम्यन्तर्गतशल्यज्ञानेन च तत्क्षेत्रस्य शुभत्व विज्ञाय मासानुसारप्राप्तदिश्येव वास्तुदेवपूजा विधाय हुतभुग्दिश्येव सर्वदा शिलान्यासो विधेयस्तथा तत्र मण्डले कस्यां दिशि प्रवेशविनिर्गमप्रधानद्वार शुभद कति द्वाराणि कर्त्तु शक्यते एव तथा दिक्परत्वेन कस्य वस्तुनो द्वारसम्मुखत्वे वेध । एवमभीष्टमण्डले चेदेकमेव गृहं कर्त्तुमभीष्ट तदा कुत्र कर्त्तव्य इत्यादि प्रपञ्चमाश्रित्य प्रबन्धो रचित.।

---

## ७. वराहमिहिरग्रन्थाः तद्विस्तरश्च

### पं० श्रीवसन्तकुमाररामकृष्णपण्डित, मुम्बई

श्रीवराहमिहिराचार्यै ज्योति शास्त्रमधिकृत्य स्कन्धत्रयेऽपि लोकविश्रुता षड्ग्रन्था विरचितास्तथापि तेषामन्येपि बहवो ग्रन्था ज्योतिःशास्त्रीयशाखोपशाखासु वर्तन्ते इति निश्चीयते। प्रथम प्रसिद्धानां षड्ग्रन्थानामुत्पत्तिक्रमानुसारं कालनिर्णयो विधीयते।

पञ्चसिद्धान्तिकायां मध्ये स्वकृतग्रन्थान्तरानुल्लेखात् पञ्चसिद्धान्तिकाग्रन्थ एव प्राथम्यादुपजीव्यत्वाच्च गणितमेव प्रथम प्रतिपादयितु समुचितम। अत एव ग्रन्थोल्लेखनक्रमेऽपि करणग्रन्थस्यैव प्रथमं बृहत्संहितादौ नामनिर्देश कृत । ( बृ स० १ १० २७. १, पं० सि० १८ ६५ ) बृहत्संहिता चास्य ग्रन्थकर्तुरन्तिमो ग्रन्थ । तत्र तत्प्रणीतसकलग्रन्थानां निर्देशात्। (बृ स० १ १०) सकीर्णविषयकत्वाच्चाय चरममेव

लेखनीय । बृहज्जातके करणं विवाहपटलं चेति ग्रन्थौ उल्लिखितौ । तेन तौ ततः प्राक्तनौ इत्यनुमीयते । अस्यैवोपसंहारे योगयात्राग्रन्थाध्यायानुक्रमणिका दत्ता । सा च योगयात्राग्रन्थः प्राक्प्रणीत इत्यनुमापयति । ( बृ० जा० २८२ ३-६ योगयात्राविवाहपटलयोर्विशुद्धलेखानुपलम्भेन तयो कतरः प्राक्तन इति निश्चेतुमशक्यम । बृहज्जातक-लघुजातकयो. पौर्वापर्य नामत एव सुनिश्चितम् । (ल. जा. १. १.) सम्प्रत्युपलब्धग्रन्थाना प्रणयनक्रमानुसारिणी मालिका यथा—(१) पञ्चसिद्धान्तिका, (२) बृहद्विवाहपटलं, (३) योगयात्रा, (४) बृहज्जातक, (५) लघुजातक (६) बृहत्संहिता—इति ।

अविज्ञातग्रन्थेषु समाससंहितेति ग्रन्थ प्राधान्येन निर्देष्टु शक्यते । भट्टोत्पलेन स्वटीकायां यतस्तस्य एकोनाशीतिवारमुल्लेख कृत । तेन च "तथा चाचार्येण समाससंहितायां" इत्युपक्रम्य मध्ये पञ्चचत्वारिशदधिकशतं श्लोका उद्धृता । ( बृ० सं १४ ३१, ७ १३, ५२. ७३. ) बृहत्संहिताविषयसंक्षेपकेणानेन ग्रन्थेन भवितव्यम् । अलबेरुणिनाम्ना वैदेशिकेनारबिभाषापण्डितेन स्वरचित "इण्डिके"ति ग्रन्थे वराहमिहिरग्रन्थानामेवन्नामावलि. प्रदर्शिता यथा—षट्पञ्चाशिका, होरापञ्चहोत्रिय, योगयात्रा, टिक्कणियात्रा, विवाहपटल, वास्तु इति । एतेषां मध्ये षट्पञ्चाशिका वराहमिहिरसूनो पृथुयशस वर्तते । होरापञ्चहोत्रयं ग्रन्थश्च नोपलब्धोऽस्माभि । योगयात्रा ग्रन्थो मुद्रितोऽस्ति । टिक्कणियात्राग्रन्थश्च भट्टोत्पलकृतयोगयात्राटीकायां पञ्चपवारमुद्धृतत्वात् वराहमिहिरप्रणीत एव इत्यत्र नास्ति सदेह । ( यो या ५.१०) । अपरश्च महान 'बृहद्यात्रे'ति ग्रन्थो हस्तलिखित समुपलभ्यते मोहमय्याम् । भट्टोत्पलयोगयात्राटीकायां "आचार्येण परायां यात्रायां पूर्वोक्तानि" इत्यादि यदुल्लिख्यते तत् बृहद्यात्राग्रन्थस्यैव प्रकारान्तरेणोल्लेख इति प्रतिभाति । ( यो या ६ २ ) 'लग्नवाराही'ति च समुपलभ्यमानो लघुग्रन्थ ( अध्याया ४, श्लोका ४६ ) बृहद्विवाहपटलस्य सक्षेपक इति प्रतिभाति । क्वचित "होराशास्त्र" मिति समुपलभ्यमान ग्रन्थान्तर बृहज्जातकमेव केवलं नामान्तरेण होराशास्त्रमिति व्यवह्रियते । अन्ये च हस्तलिखिता "दैवज्ञवल्लभा", "प्रत्यन्तरदशाफलं;" "जातकार्णवं;" भूपालवल्लभा," इत्यादयो ग्रन्था वराहमिहिराचार्यस्यैव सन्तीति केचन वदन्ति ।

## ८. कालतत्त्वम्

प० श्रीभोलानाथमिश्र, मथुराडीह, मुजफ्फरपुर

केवल कालमाश्रित्य सर्व जगत् प्रवर्त्तते। कालो हि द्विविध, व्यक्तोऽव्यक्तश्च। ब्रह्म-विष्णु-शिवाद्या कालस्यैव व्यक्त-मूर्त्तय। कालस्य व्यक्तां मूर्तिमिष्टदेवतारूपामुपास्य नदीव परब्रह्मसिन्धुमुपगच्छन्ति विवेकिन. कालो राहुस्त्रैमासिको व्यङ्गादि-यात्राया विचार्य्यमाण. शास्त्र-विचार-बहिर्भूत। तथापि विवाह प्रथमागमन, रूढमेव द्विरागमन, त्रिरागमन व्यङ्ग इति, कालस्य विचार केवलमत्रैव शास्त्र-युक्तिभ्यां प्रशस्त। सर्वासु यात्रासु काल-विचारोऽशास्त्रीय एकदेशिकश्च।

---

## ९. फलादेशविचार:

प० श्रीजगन्नाथमिश्र, कानपुर

प्रवर्तितफलादेशप्रवाहस्य विषये प्रयोजनप्रदर्शनम्। तदनन्तर जीववर्गेषु ग्रहाणां नक्षत्रपुञ्जानाञ्च प्रभावपतनस्याभिधानम्। पुनरुदाहरणप्रदर्शनद्वारा ग्रहाणां फलदातृत्वविषये विचार। सक्षेपेणान्यमहर्षिकृतेरदृष्टिगोचरत्वेन पराशरवराहमिहिरयो. कृतौ किञ्चिद्विचारप्रदर्शनम। तथा फलादेशस्य समयभेदेनोन्नतानुन्नतावस्थादिग्दर्शनम। अनुन्नतावस्थाया कारणकथनम।

---

## १०. ग्रहण विचार:

प० श्री कुशेश्वरझा, सहोडा, दरभंगा

ग्रहणं नाम छाद्यछादकयोर्योगस्तत्र चन्द्रग्रहणे छाद्यश्चन्द्रो हि विमण्डले भ्रमति-भूभातु चन्द्रकक्षायां क्रान्तिवृत्ते भ्रमति। अ.पौर्णमास्यन्ते भूभाचन्द्रौ समौ भवेताम्। पर याम्योत्तरान्तर विक्षेपतु.र वरीवर्ति। अतो यस्मिन् पौर्णमास्यन्ते सविक्षेपो मानैक्यार्धसम. स्यात् तस्मिन् पौर्णमास्यन्ते स्पर्शमात्रमेव भवेत्। यदा विक्षेपो मानैक्यार्धादल्प भवेत्तदा ग्रहण भवेत् यस्मिन् पौर्णमास्यन्ते मानैक्यार्धाद् विक्षेपोऽधिक

भवति तस्मिन् पौर्णमास्यन्ते ग्रहणाभाव स्यात्। अतोऽत्र मानै-क्यार्धसमेन शरेण विलोमतो मध्यमसपातार्कस्य ये भुजांशास्ते चतुर्दशभागा. भवन्ति। तैर्भुजभागैश्चन्द्रस्य ग्रहणसम्भवो वक्तव्य । यत्र मानैक्यार्ध परमाल्प भवेत्तत्र परमाल्पमानैक्यार्धसमेन शरेण मध्यमसपातार्कस्य भुजाशा साध्यन्ते तदाङ्कप्रमिता भागा भवन्ति। तत्र ग्रहणमवश्य सभवेत्।

गृह्णातीति ग्रहणम्- -ग्रह उपादाने इतिधातोर्ल्युट्। तत्र ग्रहण छाद्यछादकयोर्विम्बयोगार्धाल्प यदा भवति तदा पौर्णमास्यन्ते चन्द्र-ग्रहण भवितुमर्हति अन्यथा नेति। छाद्यछादकयोर्विम्बयोगार्धसमे शरे बिम्बयो स्पर्शमात्रमेवेति बोध्यम । बिम्बयोगार्धादधिके विक्षेपे ग्रहणाभाव स्यात। छादयति य स छादक छादयितु योग्यश्छाद्य । अत्र ग्रहणे राहुरेव छादक इति श्रुतिस्मृतिपुराणविदां वाक्यम। परन्तु चन्द्रग्रहणे छादिका भूभा छाद्यश्चन्द्ररिति गणकाना मतम। परन्त्वत्र राहुर्नाम पात पातस्तु विमण्डलक्रान्तिमण्डलयो सम्पात । पातव-शादेव शरो भवति। शरवशादेव ग्रहणमतोऽवश्यमेव ग्रहणं राहुर्हेतु । स्कन्धत्रयात्मके ज्योतिषशास्त्रे सिद्धान्तस्कन्धेषु पातो नाम राहु । पातस्तु क्रान्तिविमण्डलसम्पात । सहितास्कन्धे तु अमृतास्वादविशेषाच्छिन्न-मपि शिर किलासुरस्येदम। प्राणैरपरित्यक्त ग्रहता यान्त वदन्त्येके। इन्द्वर्कमण्डलाकृतिरसितत्वात् किल न दृश्यते गगने अन्यत्र पर्व-कालाद् वरप्रदानात् ग्रहणसमये कृतजपहोमै त्व तृप्ति प्राप्स्यसि ब्रह्मणा वरो दत्तो राहवे । तत्र चन्द्रग्रहणे "भून्यासहीन रविविम्ब-मिन्दु" रित्यादिना चन्द्रकक्षाया यत. भूभाविम्बमान तदेव राहु-विम्बमानमिति गणितशास्त्रे प्राचीनैर्ध्वनितम् । अतो भूभातुल्येन राहुणा ग्राहकेण चन्द्रो ग्रस्यते। चन्द्रग्रहण तु सर्वत्रैकरूप दृश्यते। सूर्यग्रहण तु प्रतिदेशमन्यादृश भवतीति लिख्यते–चन्द्रग्रहणे छादिका भूभा सा चन्द्रकक्षायामेव वर्त्तते। अतो भूभा चन्द्रविम्बे भूभान्तर्गत-भूपृष्ठनिष्ठा सर्वे स्वदेशस्था विदेशस्था अप्येकरूपं पश्यन्ति। सूर्य-ग्रहणे तु छाद्यछादकौ भिन्नकक्षागतौ वर्त्तेते। तत्र छादकश्चन्द्र. सूर्या-दधो वर्त्तते। अत सूर्यादधस्थश्चन्द्र. पश्चिमभागात् समागतो मेघ-खण्डवत् आदित्यं आच्छादयति। अस्मात् कारणात् प्रतिदेशं सूर्य-ग्रहणं नानादृष्टिवशात् न्यूनाधिक दृश्यते। यथोक्त—सूर्यसिद्धान्ते इन्दुनाच्छादित सूर्यमधो विक्षिप्तगामिना। न पश्यन्ति यदा लोका-

स्तदा स्याद्भास्करग्रहः। अथ चन्द्रग्रहणे लम्बननतीनभवत सूर्यग्रहणे लम्बननतीस्तः। अतो विशेषप्रयुक्तश्चन्द्रग्रहणाधिकारातिरिक्त. सूर्यग्रहणाधिकार । अथ किं नाम सूर्यग्रहणे विशेषप्रयुक्त लम्बनम् ? तदुच्यते-यतो दृक्सूत्राद्यावतान्तरेण चन्द्रो लम्बितस्तल्लम्बनम्। गर्भीयामान्तात्पृष्ठीयामान्तो यन्मितकालेन पूर्वं पश्चाद्वा भवति तदेव स्पष्टलम्बनम्। चन्द्रग्रहणे चन्द्रो हि स्वगोले स्वकक्षायां भ्रमति भभाऽपि चन्द्रकक्षायामेव साधितास्ति। अतश्छाद्यछादकयो. समकक्षत्वान लम्बननत्योरभाव स्यात्।

सूर्यग्रहणे तु ग्राह्यग्राहकयो सूर्यचन्द्रयो भिन्नकक्षत्वात् लम्बननती उत्पन्ने भवत। सूर्याचन्द्रमसोश्च ग्रहणे ग्रहणादिमोक्षकालदिक्प्रमाणस्थितिविमर्दवर्णदेशानामनागतग्रहसमागमयुद्धानामादेष्टा। सूर्याचन्द्रमसो ग्रहणे ग्रहणादिग्रहणप्रारम्भ जानाति। एतावति स्वदिनगते काले ग्राह्यग्राहकबिम्बसम्पर्क। तथा मोक्षकाल जानाति। एतावति गते काले मोक्ष। ग्राह्यमण्डल सकल ग्राहकस्त्यजति तथाकाल जानाति। प्रग्रहणमोक्षयोरन्तर एतावान कालः तथादिक्। यथाप्रमाण खण्डग्रहण एतावद्बिम्ब छिन्न भवति। मध्यग्रहणकालिके तिथ्यन्ते स्फुटप्रग्रहस्थित्यर्ध विशोध्य ग्रहणादिर्भवति। स्थित्यर्धद्वयस्य योग स्थितिकाल। विमर्दो निमीलनोन्मीलनयोर्मध्यकाल। तावन्त काल ग्राह्यबिम्ब सकलं ग्राहक सञ्छाद्य तिष्ठति स विमर्दकालः। तथा वर्णो ग्रहणे ग्राहकगृहीतस्य बिम्बस्य सधूम्रकृष्णताम्रकपिल इति। एतत्सर्व गणितस्कन्धे निर्दिष्टम्। वलनविक्षेपवशेन परिलेखेन प्रग्रहणादीना ज्ञानम्। निमीलनोन्मीलनविमर्दार्द्धयोर्योगे विमर्दकाल॰। वर्णो यथा आद्यान्तयो सधूम्र कृष्ण. खण्डग्रहेऽर्धतोऽभ्यधिके ग्रासे स कृष्ण ताम्र सर्वग्रहणे कपिलवर्ण।

---

## ११ परम्परागतं वैदिकं नक्षत्रारम्भस्थानम्

काशीनाथ वासुदेव अभ्यंकर, गुजरात विद्यासभा, अहमदाबाद

ऋग्वेदसंहितायां गावो हन्यन्त इत्याद्युल्लेख फल्गुनीनक्षत्रे सायंकाले पूर्वदिग्भागमलंकुर्वति तदानीमुदगयनारम्भ आसीदिति दर्शयति। तैत्तिरीयादिसंहितासु पठितेषु नक्षत्रनामसु रोहिणीति नामधे-

यमृग्वेदकाले मृगमुखस्थितो वसन्तसंपातबिन्दुस्तैत्तिरीयसंहिताकाले ईषदधिकैकनक्षत्र प्राक्चलित इति दर्शयति। एवं शतपथब्राह्मणमहाभारतवेदाङ्गज्योतिषबौधायनसूत्रजैनसिद्धान्तपञ्चसिद्धान्तिकादिग्रन्थेषूपलभ्यमानेभ्य उल्लेखेभ्य. सकाशात्तत्तद्ग्रन्थविरचनसमये समुपलभ्यमानं संपातबिन्दुचलनं ज्ञायते। सर्वेष्वप्येषु ग्रन्थेषु ऋग्वेदसंहिताकाले निर्दिष्टं मूल-नक्षत्रमेव नक्षत्रचक्रारम्भक गृहीत्वा तैत्तिरीयसंहिताकाले निश्चिता नक्षत्रमर्यादा स्वीकृता। वराहमिहिरोपि कुत्र पौष्णान्त इति व्याख्यान विना केवल पौष्णान्तो भगणः स्मृत इति प्रतिपादयन्वैदिक नक्षत्रारम्भ मूलपुष्यतारकायुग्मरूपमेव स्वीकृतवानिति तदेव नक्षत्रारम्भस्थान स्वीकृत्य तत्सकाशादेवायनचलनाशा परिगणनीया सर्वैराधुनिकैर्ज्योतिर्विद्भि ॥

---

## १२ वराहमिहिरस्य कालनिर्णये किञ्चित्

ह० वा० भिडे, गुजरात-विद्या-संस्था, अहमदाबाद

वराहमिहिरेण पञ्चसिद्धान्तिकाया प्रारम्भे शककालस्य निर्देश कृतोऽस्ति। आधुनिका ज्योतिर्विदस्त काल शालिवाहनशककाल मत्वा स वराहमिहिरस्य काल इति वदन्ति। किन्तु वराहमिहिरनिर्दिष्ट काल. शालिवाहनशककालो भवितु नार्हति अत आधुनिकैर्ज्योतिर्विद्भिर्निर्णीतो वराहमिहिरकालो न श्रद्धेय।

वराहमिहिरेण कथिता मघातारकाभोगाशा अद्यतनांशेभ्यस्त्रयोविंशत्या न्यूना। तस्य हेतुरयनबिन्दुचलनम्। स बिन्दुर्द्विसप्तत्या (७२) वर्षैरेकमशमपक्रामति। अनया गत्या त्रयोविंशतिमंशान्गन्तु तस्य १६५६ मितानि वर्षाणि जायन्ते। यदा १९४३ मितेभ्यो वर्षेभ्य १६५६ मितानि वर्षाणि न्यूनानि क्रियन्ते तदा २८७ मितो वर्षो लभ्यते। ख्रिस्तशकस्यैतद्वर्ष पञ्चसिद्धान्तिकाकारस्य वराहमिहिरस्य काल।

यवनज्योतिर्विदा हिपार्कसेन स्वकालिका मघाया भोगांशा निर्दिष्टाःसन्ति। ते वराहमिहिरेण कथितेभ्योंऽशेभ्य. षड्भिर्न्यूनाः। एतस्मात्कारणात् हिपार्कसस्य वराहमिहिरात्प्राक्कालिकत्वं, तच्च ४३२ मितैर्वर्षैरिति सिद्ध्यति। हिपार्कसः ख्रिस्तशकात्प्राक् सपादशत कोऽर्ध्व कालिक इति यत्पाश्चात्यज्योतिर्विदो वदन्ति तेनायं कालः सङ्गच्छते।

## १३. पञ्चाङ्गविमर्शः

पं० श्रीबलदेवमिश्र काशी

पञ्चाङ्गस्योपादेयता। पञ्चांगविषये प्राचीनमतम्। तत्र सौरमतम्। ब्राह्ममतम। सौरस्य प्राधान्यम्। ब्राह्ममते विशेषः। गणेशदैवज्ञस्य ग्रहलाघंकारस्य वैशिष्ट्यम। पञ्चाङ्ग किम्। तिथेर्विशेषता, पञ्चाङ्गरचनायां सूक्ष्मता, सत्यज्ञानस्य मान्यता। ग्रहणस्य चमत्कारः। पञ्चांगविवादकारणानि। तत्रोपसंहार। स्थिरनक्षत्रयोगा प्राचीनरीत्यैव साध्याः। तत्र युक्तय प्रमाणानि च। दृश्यवस्तु दृश्यगणितेन साध्यम। सायननिरयनविवादः। तत्र निरयनस्य प्राधान्यम। फलितज्यौतिषे पञ्चाङ्गस्य प्रभाव।

## १४. भास्करीयलीलावत्यां चतुर्भुजकर्णकल्पनायां भास्करमतदृढीकरणम्

पं० श्रीबलदेवमिश्र, काशी

विषमचतुर्भुजफलानयने चतुर्षु भुजेषु ज्ञातेष्वपि कर्णज्ञान विना फलस्य निर्णय कर्त्तुं न शक्यते। तदर्थं भास्कराचार्येण स्वलीलावत्या कर्णकल्पनायां युक्तिः प्रतिपादिता यस्या समर्थन गणेशदैवज्ञमुनीश्वरादिटीकाकारा कुर्वन्ति परञ्च कमलाकरभट्टेन तत्र दोषो दीयते। अन्यैरपि महानुभावैस्तन्मत स्वीक्रियते। तत्र भास्कराभिप्रायवर्णनपुरस्सर भास्करमतदृढीकरणार्थमेवैष निबन्ध।

---

## १५. अहर्गणानयनम्

पं० श्रीमुकुन्दमिश्र, सं० महाविद्यालय, मुजफ्फरपुर

अन्हां दिनाना) गणः (समूह) अहर्गणः स च रविसावनाहर्गणरूप एवाचार्येण साधित (रविसावनवशेनैव दिनरात्र्यो प्रत्यक्षदर्शनात्)। कल्पादित इष्टदिनपर्यन्तं यावन्ति रविसावनदिनानि तत्संख्यैव मध्यमसावनाहर्गण। कल्पादितो वर्षान्तावधि

भवन्ति सौरवर्षाणि तानि द्वादशभिर्गुणितानि तदा सौरमासा भवन्ति। पर वर्षान्तकालस्याज्ञानाच्चैत्रामान्तस्य च ज्ञानात्कल्पादितो गतसौरमासाश्चान्द्रमासा कर्त्तुमुचिताः। यथा

$$\frac{\text{कल्पाधिमास इष्टसौरमास}}{\text{कल्पसौरमास}} = \text{गताधिमास} \mid \frac{\text{अधिशे}}{\text{कल्पसौर}}$$

एतै सशेषाधिमासैर्युता गतसौरमासा गतवर्षान्ते - इष्टचान्द्रमासा भवन्ति, दर्शाग्रत सक्रमकालत प्रागित्यादिपरिभाषया वर्षान्तकालिकचान्द्रमासे वर्षान्ताधिशेषयोजनेनामान्ते चान्द्रमासा भवेयु। अर्थात्पूर्वानुपातेन ये गताधिमासाः समागतास्तैरेव युक्ता कल्पगतसौरमासा अमान्ते गतचान्द्रमासा भवेयुः, चैत्रामान्तादूगता सन्नामान्तावधि ये चान्द्रमासास्तैरपि पूर्वानीतामान्तकालिकचान्द्रमासा योजितास्तदा गतासन्नामान्तकाले चान्द्रमासा जातास्ते त्रिशदूगुणितास्तदा चान्द्रदिनानि भवन्ति। ततो गतासन्नदर्शान्तकालात्सूर्योदय यावद्या गततिथयस्ताभिर्युक्तास्ते पूर्वोक्तगतासन्नदर्शान्तकालिकचान्द्राहास्तदा गतासन्नतिथ्यन्ते चान्द्रदिनानि भवन्ति। तत

$$\frac{\text{कल्पावमदिन} \times \text{इष्टचान्द्रदि}}{\text{कल्पचांदि}} = \text{गतावमदि} + \frac{\text{अवशे}}{\text{कचां}}$$

गतैर्विरहितानि गतासन्नतिथ्यन्तकालिकचान्द्रदिनानि तिथ्यन्ते सावनाहर्गणो भवेत्तत्रावमशेषयोजनेन सूर्योदयकालिक सावनाहर्गणो भवेत्पर पूर्वमवमशेषो विशोधितोऽधुना योजितस्तेन तुल्यधनर्णनाशात्केवलंमनुपातागतावमैरेव वियोजितास्तिथ्यन्तकालिकचान्द्राहा सूर्योदयकाले सावनाहर्गणो भवेत्। उक्तञ्च भास्करेण।

"अधिकमासदिनक्षयशेषतो द्युघटिकादिकमत्र न गृह्यते"। कमलाकरेणाप्यहर्गणानयन कृतं तद्भास्करकथिताहर्गणसाधनापेक्षया विलक्षणं वर्त्तते। अहर्गणानयने सर्व वस्तु मध्यममानेनैव गृहीतम्। केवलं तिथि स्पष्टा गृहीताऽतस्तत्साधितोऽहर्गणो मध्यमस्पष्टतिथ्योरन्तरेणान्तरितो भवेदत आचार्येण "अभिष्टवारार्थमहर्गणश्चेत्सैकोतिरेकास्तिथयोऽपि तद्वत्। कथितम्, भास्करेण तु वर्षान्तादिष्टदिनपर्यन्तं दिनगणानां नाम लध्वहर्गण इति रचितम्। तत्साधनमपि "चैत्रसितादिगतस्तिथिसङ्घ" इत्यादिना कृत पर तन्न समीचीनमिति तदुपपत्तिदर्शनेनैव स्फुटं भवति। कमलाकरेण लध्वहर्ग

णस्य साधनं न कृतं किन्तु भास्करोक्तलम्बहर्गणसाधनस्य खण्डनं कृतम् । द्वयोर्मते केवलं गणनायां भेदो वर्त्तते, लम्बहर्गणोऽयं कदासावयव: कदा च निरवयव इत्यादेरपि निर्णयो भवितुमर्हति । अहर्गण एवोदयान्तरोत्पत्तौ मूलकारणम् । यत

$$\frac{\text{कल्पग्रभगण} \times \text{अहर्ग}}{\text{कल्पकुदिन}} = \text{गतभगण} + \frac{\text{भशे}}{\text{ककु}}$$ । प्रति दिनजगतिकलोत्पन्नासु वैषम्यमूलकप्रतिकुदिनवैषम्ये नैतादृशानुपाताभावादेकवर्षान्त पातिस्पष्टकुदिनानामेकत्रिताना कृतस्थमध्यकसमखण्डाना मध्यसावनमेव स्पष्टगतिकलाभ्यो मध्यगतिकलेतिच कृत्वैकस्तादृशो ग्रहश्चेत्कल्पितो भवेद्यस्य कुदिन मध्यमसावन तद्गतिकलाच मध्यमगतिकला भवेत्तदातत्कुदिनेनैवैवमनुपात स्यात् । परन्नाय क्रान्तिवृत्ते चलितो भवेत्तत्र समचापजासूनामन्यममत्वात् । पर कलातुल्या असवो नाडीमण्डल एवातो नाडीमण्डल एवोक्तग्रहश्चानीय इति सिद्ध । अत स्वस्वभगणादनुपातेन नाडीमण्डलीयमध्यमार्कस्य काल्पनिकत्वात्कल्पिते क्रान्तिवृत्तीयमध्यमार्क आगतोऽय मध्यमग्रह इत्यत्र "दशशिर पुरि मध्यमभास्करे क्षितिजसन्निधिगे" इति वदति । भास्करोक्ताहर्गणवशाद्वारगणनाया कदाचिद्द्विसस्करणस्यापि स्थितिर्भवति सा च स्वलिखितप्रबन्धे मया प्रदर्शिताऽत्र विस्तृतिभयादुपेक्षितेति ।

## १६. ग्रहणविषयको निबन्धः

### पं० श्रीदयानाथझा, स० महाविद्यालय, मुजफ्फरपुर

( १ ) प्रथम ग्रहणशब्दस्य पूर्वापरसमये ( वैदिकपौराणिकाधुनातनसमये ) अभिप्राय प्रदर्शित व्युत्पत्तिरपि दर्शिता—राहो परम्परया ग्रहणे कारणमपि दर्शितम्—

( २ ) अथान्धकारस्यैव तमोरूपस्यैव ग्रहणद्वये कारण छाद्यछादकयोनिर्णयपुसर प्रकटितम्—बुधशुक्रयो कृतमपि सूर्यग्रहण दूरवीक्षणयन्त्रद्वारा द्रष्टु शक्यते यथा कमलाकरेण दिग दर्शितमित्यादि प्रतिपादितम्—

( ३ ) यथाऽस्माक सूर्यग्रहणचन्द्रग्रहणे भवत तथा ग्रहपृष्ठवासिनामपि लोकाना ते ग्रहणे भवितुमर्हत इत्यपि विविक्तम्—

(४) उपग्रहस्य ग्रहस्य च लक्षणं दर्शयन्—चन्द्रस्योपग्रहत्वं दर्शितवान् तस्योपग्रहस्य नाम चन्द्रमाः—पृथ्वी अपि पाश्चात्यमते ग्रहत्वं भजते एवमेव सर्वेषां कियतां ग्रहाणामुपग्रहाः कियन्त कियन्त सन्ति तेऽपि मया प्रदर्शिता. तेषावशतोऽपि ततपृष्ठोपरि कति विधानि सूर्यग्रहणानि भवितुमर्हन्ति तान्यपि प्रदर्शितानि—

(५) केश्रकेल रन्तानुपग्रहानाविश्रानभिर तेषामपि नामानि यथा-शक्ति दत्तानि—उपग्रहवशेन शनेर्विलक्षणताऽऽत्मीयकपारीधि विम-ण्डलपरिधि भरातलयोरुत्पन्न कोणोऽपि प्रतिपादित,

(६) नवीनौ द्वौ भारतीयग्रहेभ्य' अन्यौ वकरोन्द्राख्यौ क्रमश पाश्चात्यमतेन हर्सल—नेपच्युन नामानौ लिखितौ ययो भगणावपि प्रतिपादितौ।

अथ च कियन्तोऽपि सूक्ष्मा' ग्रहा' त्रिशती ३०० तोऽभ्यधिका' मश्रालवृहस्पतिकक्षामध्ये पतितास्तेषु कियतां नामानि च लिखितानि—

(७) धूमकेतुद्वयमपि प्रतिपादितम्—यस्य नाम हली—इन्कस इति वर्तते अनयो भ्रमण समयोऽपि प्रतिपादित एनौ काभ्या माविष्कृतौ तयोर्नामापि वृत्तम्—

(८) अधुना भूयांसि सूर्यचन्द्रयोर्ग्रहणसभवज्ञान नवीन प्राचीन सस्काराभ्यां सस्कृतै रविचन्द्रपातै. सूक्ष्म प्रतिपादितम्—अत. परं स्वभारतीयज्योति शास्त्रे लिखित प्राचीननवीनमताभ्यां सूर्यचन्द्रयो स्पर्श मध्यग्रहणमोक्षादि विषया अहनीया ।

## १७. दिनरात्रिव्यवस्थाविचारः

### पं० श्रीतुरन्तलाल झा, महिनाथपुर

दिनेशस्य दर्शनादर्शनतो दिनरात्रिव्यवस्थाकल्पना । उत्म-लक्ष्मावलयान्तराले चरात् सदा निरक्षे दिनरात्रिमाने समे भवत । तथा च मेषादौ दिन महत् रात्रिर्लघुश्च, कर्कादौ तु रात्रिमहती, दिन लघु एव, एव विषुवदिने द्युनिशो समत्वञ्च भवति। अथ च षट्षष्टि-भागाभ्यधिके पलांशे हि रवेरुत्तरा क्रान्तिर्लम्बाधिकाया वरसततं दिन याम्याक्रान्तिर्यावत् सतत रात्रिरपि भवेत् । एवं मेरौ षण्मास दिनं तावती रात्रिश्चेति किञ्चि भम्विदां सतात् । अथोत्तरायणे सुराणां

दिनन्त्वसुराणां रात्रिरेव। सततव्यत्ययेनैनयोर्याम्यायने दिनरात्री भवेताम। भूपृष्ठाभिप्रायेण कमलाकरै (६८।२०)।(७८।१५)।(६०) पलभागे उदयास्तयोर्विचित्रता निरूपिता। एवं भूपृष्ठत ऊर्ध्वं यथा २ दूरगतै—१७।५४। १७० योजनैर्दृक्चिह्नं तथा उदयस्याधिकाधिकमानम। एवमेकद्वित्रिमासिक दिनव्यवस्थाकथनम। तथा चन्द्रगोले चन्द्रपृष्ठनिवासिनां पितृणा दिनरात्रिस्वरूपम। नन्वथा दर्शे तेषां मध्याह्न भवेदेव तिथ्यन्ते निशीथ स्यात्। प्राच्यमते कृष्णपक्षे सार्द्धसप्तम्यामुदय, शुक्लपक्षे तु सार्द्धसप्तम्यामस्तश्च। वस्तुतस्तु पादानषटकाष्टलवान्तरे नवत्यशमिते शुक्लांशे कपालवशेनोदयास्तौ भवेतामिति सूक्ष्मतरम। एवं क्षितेरतिदूरगतस्य ब्रह्मणो युगसहस्रेण-कल्पमानेन दिन तावती रात्रिश्च भवतीति, कल्पद्वयेनाहोरात्रम। एवं ततोऽप्यतिदूरगताना त्रिषण्वादीना यथा दूरता तथा महाप्रलयान्तं दिन रात्रिश्चेति सताम्विदुषामतिरोहितमेव शमिति।

## १८. चन्द्रग्रहणविषयको निबन्धः

### श्रीलोकनाथठाकुर, मुंगेर

चन्द्रग्रहणे छादकबिम्ब भूभाबिम्बमेव भवति तत पूर्वं भूभाबिम्बसाधन क्रन यद्यपि सूच्याकाराया भभाया दीर्घता भवति। यत सूर्य्यबिम्बस्य गुरुत्वात् भूबिम्बस्य च लघुत्वात् बिम्बयो स्पर्शरेखा सूर्य्याद्विरुद्धदिशि मलग्ना भवन्ति। ताश्च चन्द्रकक्षामतीत्य-बहिर्दूरगता भवन्तीति नाविदित गोलज्ञानां। भानोर्बिम्बपृथुत्वादपृथुपृथिव्या प्रभा हि सूच्यग्रा। दीर्घतया शशिकक्षामतीत्य दूरं बहिर्याति, इति सिद्धान्तशिरोमणीयगोलाध्यायस्थपद्येन, परंतु चन्द्रस्तु चन्द्रगोल एव भ्रमति। ततश्चन्द्रग्रहणविचारार्थ चन्द्रगोलीयैव भूभापूर्वै साधिता। सा च भूभाविस्तृति भूव्यासहीन रविविम्बमिन्दुकर्णाहत भास्करकर्णभक्तम्। भूविस्तृतिर्लब्धकनेन हीना भवेत्कुभाविस्तृतिरिन्दुमार्गे। इत्यनेन श्रीमद्भिर्भास्कराचार्य्यैर्या साधिता सा न वास्तवा चन्द्रगोलीया किन्तु चन्द्रकक्षोर्द्धगता भवतीति तद्वासनाऽवलोकनेन स्फुटमवसीयते। एवमेव मुनीश्वराचार्य्यैरपियद्भूभाबिम्बानयनमकारि तन्न वास्तवमिति भट्टकमलाकरेण सिद्धान्ततत्त्वविवेके

साधु खण्डितम्। यद्यपि चन्द्रकक्षाया स्थितयैव भूभया चन्द्रविम्ब स्पर्शः पूर्वं भवति यदा तु चन्द्रकक्षास्थया स्पर्शो भवति तदा तदधस्ताया किंचिद्ग्रहणमपि भवति चन्द्रविम्बस्येति सिद्धान्ततत्त्वविवेके भट्टकमलाकरेण शशाकस्य गोले कुभामानमल्प ततोऽधस्थित चाधिक सर्वदैव। अथ सस्थिताया कुभाया च पूर्वं विधोर्विम्बगोलस्थमस्प र्शन स्यात इति साऽवाह परतु पूर्वाचार्य्यै सर्वैरेव चन्द्रकक्षीयैव भूभासाधिता। यतश्चन्द्र चन्द्रकक्षीयामेव भ्रमति ततो वास्तवचन्द्रकक्षीयाभूभा इतावनी व्यास वियोगखण्डमित्य दिना कमलाकरेण स्वनिर्मितसिद्धान्त तत्त्वविवेके साधु साधिता। महामहोपाध्यायै श्रीमत्परमगुरुसुधाकरद्विवेदिचरणैरपि रवितनुदलजीवालम्बनोर्व्याविहीना क्षितिजनिततयातत कार्मुक कार्य्यमार्य्यै। द्विजपतिजपरार्थ लम्बन तद्विहीन भवति वसुमतीभाविम्बखण्ड सुस्फुतमम। इत्यनेन वास्तवा चन्द्रकक्षीयैवज्याभूभासाधिता। सशोवकेनापि दिवाकरनिशानाथपरलम्बनसम्प्रति सूर्य्यबिम्बार्द्ध रहिता भूभाविम्बदल भवेत्। इत्यनेन चापयोरभेद स्वीकृत्य चन्द्रकक्षीयैव भूभासाधिता परमिय ज्याचापयोरभेदस्वीकारात्। किंचित स्थूलेतिनाविदित गोलपटूनाम। गोलविज्ञाना प्रयोजनमस्या भाया चन्द्रग्रहणसाधने भवति। यतश्चन्द्रबिम्बस्य भूभाबिम्बमेव छादकबिम्ब भवति। सूर्य्यग्रहणे तु चन्द्रबिम्बमेव छादकबिम्बम्। यतउक्तम छादयत्यर्कमिन्दुर्विधुभूमिभेति गणेशदैवज्ञोक्त न पद्येन। तथाच भूभाविधु विधुरिन ग्रहणेऽपि भत्ते इत्यनेन भास्करोक्तसिद्धान्तशिरोमणिस्थपद्येन सुविदितमेव ज्योति शास्त्राध्येतृणाम्। सर्वेषामेव ज्यौतिषसिद्धान्तयुक्त्या चैतत्सर्वविदितमेव। यद्यदा पूर्णिमाया मानैक्यार्द्धादधिको विक्षेपश्चन्द्रस्य भवति तदास्पर्शाभाव। यदा च मानैक्यार्द्धसमो विक्षेपस्तदाग्राह्यग्राहक बिम्बयो केवल स्पर्श एव। यदा च न्यून शरस्तदा ग्रहण यदा च मानान्तरार्द्धसम शरस्तदा सर्वग्रास। यदा च मानान्तरार्द्धादल्प. शरस्तदाखग्रासो भवतीति सर्वगोलज्ञान नातिरोहितमिति।

## १६. फलितज्योतिःशास्त्रे वृष्टिविचारः

पं० श्रीरामलोचनशर्म्मा, बरदेपुर

अथैतज्ज्योतिःशास्त्रस्य सिद्धान्त-संहिता-होरेति स्कन्धत्रयात्मकं सुप्रसिद्धमेवास्ति । तथा श्रौतस्मार्तकर्मोपयोगिकमितिच सिद्धान्तितमेव । अन्यशास्त्रवत् केवलं विवादास्पदं न प्रत्यक्षत्वात्, यद्यपि शास्त्रेऽस्मिन् बहवः प्रत्यया ग्रहणशृङ्गोन्नत्यादि तथापि फलितविषये वृष्टिसमयनिर्णयोऽपि महान् प्रत्ययः । तत्र वृष्टिप्रवर्तका देवाः के तथा धूमराशिभिर्मेघानां समुत्पत्तिरिति कथनं, आदित्यात्कथं वृष्टिः कति प्रकारका मेघास्तल्लक्षणादि कथनं, धृतस्य गर्भस्य कदा प्रसवकालो गर्भसंभवलक्षणं तथा गर्भकाले मेघानां शुभलक्षणं केषु नक्षत्रेषु धृतो गर्भो बहुतोयदो भवतीति निर्णयः कानि पञ्चनिमित्तानि गर्भधारणे, एकैकनिमित्तहानौ कति योजनानि वृष्टिर्भवति कार्तिकादिमासे तिथिवशेन, नक्षत्रवशेन च वृष्टिविचारः रोहिणी स्वात्यादियोगश्च ग्रहस्थितिवशेन तथा प्रश्नकालिकग्रहस्थित्यादिवशेन च, भूस्थजीवादिनिमित्तवशेनापि कथितप्राचीनरीत्या वृष्टिविचारो निबन्धे प्रदर्शितः । तथा नवीनवैज्ञानिकमतेनापि मेघरूपकथनं, किं नाम वर्षा कदा केवलं मेघरूपदर्शनं भवति । कदा करका भूमौ पतति, शैत्याधिक्यं कथमित्यादि निबन्धेश्चापि दर्शितं ।

---

## २०. आयुर्विवेकः

पं० श्रीयुगलकिशोरमिश्र, अन्धराठाढ़ी

तत्र आयुः किं नाम । जन्मवतां जीवनस्थितिकालः आयुः । तच्च जन्मलग्नात्तृतीयस्थानमष्टमस्थानञ्चायुः स्थानम् । तस्य चत्वारो भेदाः । जन्मतः प्रभृति द्वात्रिंशद्वर्षपर्यन्तमल्पायुः । ततश्चतुःषष्टिवर्षपर्यन्तं मध्यमायुः । ततः शतावधि यावत् दीर्घायुः । ततो विंशत्यधिकशतवर्षं यावत् उत्तमायुरिति । केचित्तु अल्पाल्पायुः अल्पमध्यमायुः अल्पदीर्घायुः । मध्यमाल्पायुः मध्यममध्यायुः मध्यमदीर्घायुः । दीर्घाल्पायुः दीर्घमध्यमायुः दीर्घदीर्घायुः । अल्पायुर्मध्यमायुर्दीर्घायुर्वा आयुषो निश्चये कृते तन्मध्ये मारकेशदशा मारकस्थानस्थितपापग्रहदशा मारकेशसंबंधिकर्तृदशा वा समायाति तदा तत्र निधनं वाच्यमिति ।

जैमिनिमतेनायुस्त्रिविध । अल्पायुमध्यमायुर्दीर्घायुर्भेदात् । तद्यथा चरराश्यो स्थितयो स्थिरद्विस्वभावराश्यो स्थितयोश्च लग्नेशाष्टमेशयोर्दीर्घायु । द्विस्वभावराश्यो स्थितयोश्चरस्थिरराश्योश्च स्थितयोर्मध्यमायु । स्थिरराश्यो स्थितयोश्चरद्विस्वभावराश्यो स्थितयोश्च तयोरल्पायु । एवं लग्नचन्द्राभ्या शनिचन्द्राभ्या वा विचार कार्य । जन्मलग्नस्थिते सप्तमस्थिते वा चन्द्रे चन्द्रलग्नाभ्यामन्यथा शनिचन्द्राभ्याम् । तथा जन्मलग्नहोरालग्नाभ्या विचार कार्य । पूर्वोक्तत्रिविधायुर्दायेषु प्रकारत्रयेणैकाकारायु प्रदत्वे निर्विवाद एव । तत्र भिन्नत्वे, प्रकारद्वयेन यदायुरायाति तदेव ग्राह्यम । प्रकारत्रयेणापि भिन्नभिन्नरूपेणागते आयुषि लग्नहोरालग्नाभ्या यदेवागत तदेव ग्राहयम । एभि पएणवत्यष्टोत्तरशतविशत्यधिकशतवर्षात्मक प्रथमद्वितीयतृतीयखण्डन्दीर्घायु निर्णीतम । चतु षष्टिद्विसप्तत्यशीतिवर्षात्मक प्रथमद्वितीयतृतीयखण्डम्मध्यमायुर्निर्णीतम । द्वात्रिशत्षट्त्रिशत चत्वारिशद्वर्षात्मक प्रथमद्वितीयतृतीयखण्डमल्पायुर्निर्णीतम । योगत्रयेणापि दीर्घखण्डस्य प्राप्तौ चत्वारिशद्वर्षरूप योगद्वयेन षट्त्रिशतवर्षरूप योगैकेन द्वात्रिशद्वर्षात्मक खण्डग्राह्यम । मध्यमायुषि लग्नेशाष्टमेशाभ्यामायुरानयने चत्वारिशत् लग्नचन्द्राभ्यां शनिचन्द्राभ्या वा षट्त्रिशत लग्नहोरालग्नाभ्यां द्वात्रिशद्वर्षरूप खण्डप्रकल्पयेत ।

न च स्वर्क्षोच्चगे शनौ कक्ष्याह्रासो स्यात अर्थात् नीचराशौ शत्रुराशौ वा शनौ कक्ष्याह्रासो नान्यत्र । केवलपापदृग्योगिनि शनौ नीचादिराशिस्थितेऽपि न कक्ष्याह्रास ।

तथा लग्नसप्तमगे गुरौ केवलशुभदृग्योगिनि च कक्ष्यावृद्धि अर्थात् स्वर्क्षोच्चगे गुरौ कक्ष्यावृद्धिर्नान्यत्र । कक्ष्याह्रासस्तुदीर्घायुषि मध्यमा मध्यमायुषि अल्पायु । एतस्य विपरीत कक्षावृद्धि । प्रकारान्तरेण जन्मलग्नात्सप्तमाच्च यौ अष्टमेशौ तयोर्मध्ये यो बली तस्मिन् केन्द्रस्थिते दीर्घायु पणफरे मध्यमायु आपोक्लिमे अल्पायु । अत्रलग्ने विषमे सति क्रमात् समे उत्क्रमाच्चाष्टमेशो ग्राह्य । जन्मलग्नसप्तमाच्च नवस्थानस्थिते आत्मकारके विपरीतमर्थाद्दीर्घ चेदल्प मध्य चेन्मध्यं हीन चेद्दीर्घम् । तथा अष्टमेशयो कारकेण सहयोगे ऐक्ये वा मध्यमायु अर्थात् दीर्घ चेन्मध्य हीन चेदपि मध्यमायुरेव । तथाच लग्नेशाष्टमेशौ एकादशपचमयोश्चेद्दीर्घायु एकादशतृतीययोश्चेन्मध्यमायु एकादशद्वितीयोश्चेदल्पायुः द्वावपि एकादशे गतायु । तथा तौ लग्नत्रिकोणे

चेद्धीनायु लग्नेशत्रिकोणे चेन्मध्यमायु' लग्नेशाश्रितराशिनाथत्रिकोणे चेद्दीर्घायु' । तथाच यदि लग्नेश सूर्यस्य शत्रुस्तदाल्पायु समे सति मध्यमायु मित्रे चेद्दीर्घायुरति ॥ मारकेशविचार ॥ जन्मलग्नात् द्वितीयस्थान सप्तमस्थान च मारकस्थान तत्र सप्तमस्थानापेक्षया द्वितीयस्थान बलवत्तरम । तेन जन्मलग्नाद्वितीयराशीशस्य दशाविपाकेषु निधनमथवा तत्र गता ये पापा मारकेशेन युक्ताश्चेत्तेषा दशायां सम्भवे सति निधन वाच्यम । शनिकेतू महामारकसञ्ज्ञौ अष्टमेश्वरश्चापि मारकेश पापबहुले षष्ठेशे सति ततेव मुख्यमारकेश मारकेशदशाकाले मारकस्थस्य पापस्य पाके सम्भवे निधन, तदसम्भवे द्वादशेशदशाया निधन मारकग्रहयोगत पापयुक्तश्चशनि सर्वान् ग्रहान् तिरस्कृत्य निहन्ता स्यादिति ॥

## २१. चन्द्रशृङ्गोन्नतिः

### पं० श्रीगौरीकान्तमिश्र, देवही

दृश्यशुक्लवृत्तसम्पातरूपयो शृङ्गयारेकतरस्योन्नति रितिशृङ्गोन्नति । सा तु मासान्तपादे प्रथमे च शशिबिम्बे विषाणरूपालोकैवलोक्यते । तस्या शुभाशुभ फलादेश संहितायां बहूनि सन्त्यतस्तस्याः साधनमुपयोगत्वान प्रथम दृश्यशुक्लभागस्य क्रमश अर्धाल्पमर्धाधिकञ्च युक्ता भवति तत्र प्राचीनार्वाचीनानां मतद्वैध तत्र वास्तवत्व च प्रतिपाद्य बिम्बान्तरसूत्रस्य साधन स्पष्टा·तराशानयन च प्रतिपादितमस्ति । अथ वास्तवदृश्यवृत्तभूतले वास्त शुक्लवृत्तवृत्तस्य परिणामेन 'प्रतिभावोधकयुक्त्या सिद्धदीर्घवृत्तस्य समाधान विधाय कदा शृङ्गयो समत्व कदा अर्ध्वाधरत्वं भवतीति प्रदर्श्य कथ शुक्लस्योपचयापचय जनैरवलोक्यते तथा "विधुदृग्वलयाद्यदिकुंसताग्र्यवलय भवेत् । ज्ञेयादिग्वलनस्यापि सैव दिग्धी मता सदा । एवम्-स्यात्तुङ्गशृङ्ग वलनाशमत्र" इत्यादि युक्त्या प्रतिपाद्य तत्र प्राचीनाना मत तिरस्कृत्य नवीनमत स्वीकृत्य, तत्रवैलक्षण प्रदर्शितम् । एव देश विशेषण सर्वदा उत्तरशृङ्गस्यैवोन्नतिरिति प्रतिपादितमस्ति इति ।

## २२. भगोलीयविचारः

### पं० श्रीव्रजबलालझा, मुंगेर

भगोलीयविमण्डल परिणतवक्रे वृत्तत्वं खण्डनं भास्करमतप्रति-पादनपुरस्सरं तथा कीदृक्सख्यायां वृत्तत्व च भवति परिणतवक्रस्य कूर्मपृष्ठा कृतिवक्रमिति नामरत्तण तत्र सर्व कर्णन्यूनाधिकनिर्णय वक्रेस्य लघुव्यासबृहद्व्यासनिर्णयविलसितलघुचापमहत्तमचाप कथनंपरमशरस्थाने चेष्टशरस्थाने च तथातदुपयोगिन कतिचन नवीनविशेषसिद्धान्त दर्शनम् अथ च सूच्यां केन्द्रलग्नांधारगत त्रिभुजेषु शीर्षगकोणो यदि समकोणस्तदल्पोऽधिकोणो वा तदा सर्वेऽपि कोणास्तथाविधा समकोणाल्पाधिककोणा भवेयुरिति दर्शनम्। तथा चान्यद्वैचित्र्यमत्र यथा स्थिरत्रिभुजीयशीर्षकोणसमद्विभाग-कर्त्ररेखास्थबिन्दुतो या अनेका अन्या अर्थात तत्समान्तरा पूर्ण-ज्या भवेयुस्तासां चापान्युक्तविन्दोभगोले परिणामि तानि तेभ्यस्तु-ल्यान्तरितानि भवन्तीति खे स्पष्ट प्रतिभात्येवमत्रानेकेऽनुभूत नवीनविषया स्थले स्थले समुपयुक्तास्सनिवेशिता इति शम।

## २३. लंबनप्रयोजनम्

### पं० श्रीरमाकान्तमिश्र, पिपराढ़ी

गर्भीय दर्शान्तकालाल्लवतान्त रेणपृष्ठीय दर्शान्तकाल स्यात्त-देव लंबनशब्देन कथ्यते। अतएव तेन लवनेनासत कृत्संस्कृत पर्व विरामकाल पृष्ठीयदर्शान्तकात स्यात्। किन्तुमध्यग्रहणकाल. स्यात्। किच मध्यग्रह पर्वविरामकाले, इत्यनेन तिथ्यन्ते मध्यग्रहणं भवति किन्तु दर्शान्ते मध्यग्रहणं भवति तेन लवनसस्कारस्य किं प्रयोज-नम्। तत्र दर्शान्तशब्देनगर्भीयदर्शान्तस्तेन लंबनेन सस्कृत पर्व-विरामकाल किन्तु गर्भीय दर्शान्तकालस्तदा पृष्ठीयदर्शान्त काल स्यात्। दर्शान्त लक्षण प्रथम प्रतिपाद्यते—यदैकगर्भसूत्रे गर्भीय रवि-चन्द्रौ स्याता तदा गर्भीयदर्शान्तकाल।

तथैवैकपृष्ठसूत्रे 'पृष्ठीयरविचन्द्रौ स्यातां तदा पृष्ठीयदर्शान्त कालस्यात्'। अत्र गर्भीयदर्शान्तवत्पृष्ठीयदर्शान्तस्यलक्षण क्रियते

तदा दोषापत्ति । यतो रवि क्रांतिवृत्ते चन्द्रस्यापि स्थानं क्रांतिवृत्ते तेन द्वयो क्रांतिवृत्ते स्थितत्वात् तयोगतारेखा क्रांतिवृत्तधरातले सिद्धा तेन भूपृष्ठचिन्हमपि क्रातिदलधरातले जातम् भूगर्भस्य क्रांतिवृत्त-धरातले स्थितत्वात् सपूर्णमुर्ध्वाधरसूत्रं क्रांतिवृत्तधरातले सिद्धं तने क्रातिवृत्त खमध्यगत स्यात् । तेनयदाहङ्मण्डलानुकार क्रांतिवृत्त-भवेत्तदैव पृष्ठीय दर्शान्तकाल स्यात । तेन जिनाधिकाद्यांशदेशे कदापि पृष्ठीयदर्शान्तस्य लक्षण वक्तु नोशक्यते पर चेद प्रत्यक्षबाधितम अथात्र लंवनसस्कारे असकृत्कर्मण प्रवृत्ति कथम । तदुच्यते लवनतु रविचन्द्रयोर्गत्यन्तरवशेन भवितव्यम् । तद्यथा—गर्भीयदर्शान्त काले गर्भीय रविचन्द्रयोरन्तराभाव एव, परच पृष्ठीयदर्शान्तकाले तयोर्गर्भीयरविचन्द्रयोर्यदन्तर तदेव लवन तस्य घटयात्मक मानं संसाध्य सकृत्सस्कारेण गर्भीयदर्शान्ते पृष्ठीयदर्शान्तकालस्य ज्ञानं स्यात् परच पृष्ठीयदर्शान्तस्याज्ञानात् गर्भीयदर्शान्तकालमेव पृष्ठीय-दर्शान्तकाल प्रकल्प क्रियते तेनासकृत्कर्मण प्रवृत्ति ।

---

## २४. अतिचारविचार:

### पं० श्रीसीतारामझा, काशी

ससारे सकलान्यपि कर्माणि तत्फलानि च । समयाधीनानि । स च समयोऽनेकविधोऽपि शुद्धाशुद्धभेदेन द्विविध । शुद्धे समये समारब्धे शुभकर्मणि सम्यक् साफल्य भवति, अशुद्ध समये समारब्धे सुकर्मणि वैफल्यमिति पूर्वैर्महर्षिभि पुन पुन परीक्ष्य यत प्रतिपादित तदेव शास्त्रमित्यस्माभिर्मन्यते ।

सोऽपि समयो वर्ष-मास-दिनभेदेन त्रिविध । तानि च शुद्धाऽधिक-क्षयभेदेन त्रिविधानि । तत्र शुद्धे वर्षे, शुद्धे मासे, शुद्धे दिने एव विवाहादिशुभकर्माणि कर्तव्यानि । अधिक-क्षय-वर्षमास-दिनानि च शुभकर्मणि त्याज्यानि ।

तत्र वर्षशुद्धिर्बृहस्पतिचारेण ( राशे राश्यन्तरगमनेन ) । मास-शुद्धि सूर्यसचारेण ( राशे राश्यन्तरगमनेन ), दिनशुद्धिश्चन्द्रचारेण ( तिथेस्तिथ्यन्तरगमनेन ) ज्ञायते ।

तत्र ग्रहाणां गतिस्वरूपम् । ग्रहाणां कलात्मिका गति सदा एक-रूपा न भवति । पृथिव्या दूरासन्नस्थितितया ग्रहतो क्रमेण ह्रासो,

पुनः क्रमेण वृद्धिरेव पुन पुन ह्रासो, वृद्धिश्च भवति। तादृशीतत्त्कालिकीगति· स्पष्टा गति. कथ्यते। तथा परमाल्प-परमाधिकस्पष्टगतियोगार्धसमा मध्या गति., कल्पिता। वास्तवो ग्रहस्तु स्पष्ट गत्या गच्छति। मध्यगत्या गमनशील कल्पिते। मध्यमग्रह स्वीक्रियते।

अतो ग्रहाणा मध्यमस्पष्टभेदवशेन समयोऽपि ( वर्ष, मास, तिथिश्च ) द्विविध।

अथ ग्रहगतिभेद प्रदर्श्यते—यदा वास्तवो ग्रह स्वस्वकल्पितमध्यमग्रहात् पृष्ठतो भवति तदा तस्य गतिर्मन्दा, कृशा वा कथ्यते। यदा च मध्यमादग्रतो भवति तदा तस्य गति· शीघ्रा, चरा वा कथ्यते। यदा च ग्रहश्चरगत्याऽग्रिमराशि गच्छति तदा तस्य गतिरतिचरा कथ्यते, स एव ग्रहोऽतिचारी भण्यते।

तत्र चन्द्रातिचारे पुनश्चन्द्रस्य वक्रगत्या पूर्वतिथ्यागमनाभावात् तिथिक्षयो निश्चित। एव सूर्यातिचारेऽपि पुन पूर्वराश्यागमनाभावत् क्षयमासो निश्चित एव। जीवातिचारे तु जीवस्य पुनर्वक्रगत्या पूर्वराश्यागमनसभवात् क्षयसवत्सरस्यानिश्चितत्वम् अत एव गुर्वतिचारस्य द्विविधत्व सिध्यति।

एतेन एकस्मिन् दिने तिथित्रयस्पर्शे क्षयतिथि। एकस्मिन् मासे रविराशित्रयस्पर्शे क्षयमास। एव एकस्मिन् सवत्सरे गुरुराशित्रयस्पर्शे क्षयवत्सरो भवति।

एतदेव भिन्नभिन्नशब्देन पूर्वै प्रतिपादितम। तत्र गुर्वतिचार लक्षण यथा।

( १ ) एकस्मिन सवत्सरे स्फुटगुरुराशिद्वयसचार। कालिदासादय।

( २ ) एकस्मिन् संवत्सरे स्फुटगुरोः पूर्वराशित्यागोऽग्रिमराशिगमनं चातिचार·। महेशठक्कुरादय.।

( ३ ) स्पष्ट गुरुराशौ संवत्सरसमादयभावोऽतिचारः।

( ४ ) स्वमध्यमात् पूर्वमेव स्फुटगुरोरग्रिमराशिसंचारोऽतिचारः।

( ५ ) मध्यराश्यधिकरणकस्फुटगुरोरग्रिमराशिगमनमतिचारः। इति भुवनदीपककारादय.।

इति सर्वमपि लक्षणमेकस्मिन् लक्ष्ये घटते। एवं महातिचारे सति वर्तमानराशिसम्बन्धिसंवत्सरस्य लोपो भवति। स संवत्सरः शुभकर्मणि त्याज्य प्रतिपादित पूर्वाचार्यैः।

इत्येव माननीय म-म-महेशठक्कुरमहोदयैः-सविस्तर स्फुट प्रतिपादितम्। तत्तु कालान्तरे निपुणज्योतिर्विदभावसमये केनचित् पञ्चाङ्गलेखकेन ग्रहगतिज्ञानाभावात् शब्दार्थबोधाभावाच्च भ्रान्त्याऽनतिचारेऽप्यतिचारो विलिखित। तदनुसार स्वयमविविच्यवाधुनापि प्रचाल्यते विज्ञैरपीति निष्पक्ष विवेचनीय विपश्चिद्भि।

## २५. पञ्चाङ्गपरामर्शः

### पं० श्रीसीतारामझा, काशी

संसारेऽस्मिन् सर्वाण्यपि कार्याणि कालाधीनानीति नाविदितं विदाम्। भगवत कालस्य बहूनि अङ्गानि सन्ति। तेषु चान्द्रम्, सौरम्, सावनम्, नाक्षत्रम्, तथा बार्हस्पत्यमिति पञ्चाङ्गानि मुख्यानि। एभिरेव मनुष्यै सर्व कार्य क्रियते। एषामेव पञ्चानामङ्गाना समहार पञ्चाङ्गमित्युच्यते। तथा यत्रैषा स्फुटपरिमाणं लिख्यते तान् पत्रमपि पञ्चाङ्गपदेन व्यवह्रियते।

तत्रादौ चान्द्र कालो निरूप्यते। चन्द्रबिम्बे सूर्यरश्मिसंयोगेन काले यद् वैलक्षण्य जायते स चान्द्र काल। स च सूर्यचन्द्रयोरन्तरवेशेनोत्पद्यते। सूर्यात् चान्द्रो यदा द्वादश भागान्तरितो भवति तदैका तिथिर्भवति।

अतो गणितद्वारा स्फुटरविचन्द्रयोरन्तरज्ञानेन तिथिज्ञान भवति। एतत् प्रयोजन पितृकार्यादौ भवति।

सौर कालो निरूप्यते। नक्षत्र-राशिरश्मिषु सूर्यरश्मिसंयोगेन काले यद् वैलक्षण्य जायते स सौरः कालः। तत्र मेषादिद्वादशराशिभि. सह द्वादशसौरमासाः, मासस्य त्रिंशत्तमो भागः सौरं दिनम्। अतः सौरकालज्ञानं सूर्यगतिवशेन गणितद्वारा भवति। कृत्वयनादिज्ञानार्थमेतत्प्रयोजनं भवति।

अथ सावन. कालो निरूप्यते। दैनिकगत्या पृथिव्याः परिवर्तनेन पृथिव्यामर्करश्मिसम्पर्कवशेन यद् वैलक्षण्यं जायते स सावनः कालः।

तत्र यावता कालेन पृथिव्या एक परिवर्तनं भवति अर्थात् समस्त-भूभागेषु यावता कालेनैकवार रविरश्मिसयोगो भवति तद् भूदिनं, कुदनं भूसावनं, रविसावनदिन च कथ्यते। एतत् प्रयोजनं च सूतकादौ दिनसख्याग्रहणे भवति। सूर्योदयेनैतज्ज्ञानं भवति।

अथ नाक्षत्रकालो निरूप्यते आकाशस्थनक्षत्रमण्डलस्य (क्रान्ति-वृत्त सज्ञस्य) समा सप्तविंशतिभागा एव सप्तविंशति नक्षत्राणि कथ्यन्ते। तत्तद्विभागेषु नक्षत्रसमूहाकृत्यनुसारमेव तेषामश्विन्यादीनि नामानि कृतानि पूर्वाचार्यैः। तेषा (अश्विन्यादिनक्षत्राणा) रश्मिषु चन्द्ररश्मिवशेन काले यद् वैलक्षण्यमुत्पद्यते स नाक्षत्रकाल इत्युच्यते। तत्र चैकैकस्मिन नक्षत्रभागे यावत् चन्द्रबिम्बसयोगो भवति तावदेक नाक्षत्र दिनमित्यभिधीयते। अतश्चन्द्रस्थितिवशेन तद्गत्या गणितद्वारा च नाक्षत्रकालज्ञान भवति एतत्प्रयोजन तु कृषिकृत्यादौ समस्त-यज्ञविवाहादिशुभकार्येषु च भवति।

अथ बार्हस्पत्य कालो निरूप्यते। प्रत्येकराशौ बृहस्पतिरश्मि-सयोगेन काले यद् वैलक्षण्य जायते स बार्हस्पत्य काल। तत्रैकैक-राशिभोगकालो बार्हस्पत्यसवत्सरोऽभिधीयते। एतत्प्रयोजन तु वर्षफलकथने, सकल्पादौ च भवति। बृहस्पतिस्थितिवशेन तद्गत्या चैतज्ज्ञानं भवति।

एव नक्षत्र-ग्रहबिम्बस्थानदर्शनेन तत्तत्कालज्ञानात पञ्चाङ्गस्य दृश्य विषयत्वमेव सिद्ध्यति। यतश्चन्द्रनक्षत्रस्थितिदर्शनेन नाक्षत्रकालज्ञानम्। सूर्यचन्द्रान्तरदर्शनेन तिथि(चान्द्रकाल)ज्ञानम्। सूर्योदयदर्शनेन सावनकालज्ञानम्। सूर्यस्थितिदर्शनेन सौरकालज्ञान-म्। बृहस्पतिस्थितिदर्शनेन बार्हस्पत्यकालज्ञानं भवति।

अत एव यत्र ज्योतिर्विन्नास्ति तत्रापि भिल्लादिमूढजनैरपि चन्द्रबिम्ब दृष्ट्वा "अद्य द्वितीया अद्य पूर्णिमा" इति ज्ञात्वा क्रमेण तिथिज्ञान क्रियते। अत सर्वेऽपि तिथ्यादिविषया दृश्या एव।

येषा नक्षत्रग्रहबिम्बाना परिचयो विद्यते ते तु गगने चन्द्रादि-स्थिति दृष्ट्वा सम्मुख तिथ्यादि ज्ञान कर्तुमर्हन्ति। किञ्च क्षितिजादध-स्थे ग्रहनक्षत्रेऽथवा मेघाच्छन्ने गगन तिथ्यादिज्ञानार्थ तत्तद्ग्रह-गतिवशेन गणितद्वारा चन्द्रादिस्थितिबोधक शास्त्रं पूर्वाचार्यैः यत् प्रतिपादितं तदेव कालबोधकं ज्यौतिषं च कथ्यते।

तत्र व्यवहारे स्थूलगतिग्रहणात् कालान्तरेण ग्रन्थे शैथिल्यं समायाति, अतस्तद्ग्रन्थद्वारा साधितास्तिथ्यादयोऽप्यवास्तवाभवित-मर्हन्ति। तस्मात् समये समये ज्यौतिषग्रन्थस्य संशोधनस्याश्यवकता भवति।

एनेन पञ्चाङ्गस्य सर्वदा दृश्यत्वमेव सिद्ध्यतीति।

# काव्य-साहित्य-विभागः

## १. काव्य-विमर्शः

पं० श्रीकृष्णमाधवझा, बम्बई

निश्चितस्वरूपकमेव काव्यं प्रवर्तिष्यति स्वरूप निश्चयश्च निर्दुष्टलक्षणं विना न सम्भवति पश्यामि चानेक परस्परविरुद्ध-लक्षणानि। आस्वादव्यञ्जकत्वं काव्यत्वम्। तददोषौ शब्दार्थौ सगुणा वनलङ्कृती पुन क्वापीति। रसवदेव काव्यम्। चमत्कार जनकभावनाविषयार्थप्रतिपादकशब्द काव्यमित्येतानि विप्रति-पत्त्या संशयमेव जनिष्यन्ति न निश्चयमतो निर्दुष्टलक्षणमन्वे-षणीयम्। तच्चेतरेषु दोषदर्शनपूर्वकमतो दोष दर्शयामि। तथाहि तादृशव्यञ्जकत्वस्य शब्दार्थोभयपर्याप्तत्वे समुदायपर्याप्तधर्मेण प्रामाणिका अवयवेतद्वत्ता न व्यवहरन्ति तथा च श्लोकवाक्य न काव्यमर्थो न काव्यमित्यापन्ति। न च प्रत्येकपर्याप्तत्वे का क्षति। यत्रोभयवैचित्र्य तत्र काव्यद्वयव्यवहारान्त। न चास्वादत्वावच्छि-न्नव्यङ्ग्यतानिरूपित व्यञ्जकता विशिष्टत्व काव्यत्वम्। वैवक्ष्यनिरू पितविषयत्वसम्बन्धावच्छिन्नावच्छेदकतावत्कवि प्रौढोक्तिकल्पिता-र्थत्व स्वविशिष्टत्वान्यतर सम्बन्धेन। अत्र वै० स्वनिरूपित विषयत्व सम्बन्धावच्छिन्नावच्छेदकतावत्कवि प्रौढोक्तिकल्पित शब्दत्व स्वभाव-वत्वोभय सम्बन्धेन। स्वाभावश्च स्वनिरूपितविषयत्वसम्बन्धावच्छे देकभावत्कविप्रौढोक्तिकल्पितार्थप्रतिपादकत्व सम्बन्धावच्छिन्नप्रति-योगिताक। एवञ्च यत्र शब्दे कवि प्रौढोक्ति कल्पितत्व वर्तते तत्र सव्यधिकरणसम्बन्ध.। शब्दार्थोभयत्र कविकल्पनासत्वेऽपि प्रौढोक्ति कल्पनाया अन्यतरस्मिन्नेव सत्वान्नैकत्र काव्यद्वय व्यवहार इति वाच्यम्। एवं सति रागस्यापि रसव्यञ्जकताया ध्वनिकारादिसकला

लङ्कारिकसम्मतत्वेन प्रकृते लाक्षणिकत्वापत्तरेतो प्रथमलक्षणं न युक्तम। नददोषौ शब्दार्थाविति द्वितीय लक्षणमपि तथैव काव्यत्वस्य उभयपर्याप्तत्वे पूर्वोक्त एव दोष । प्रत्येक पर्याप्तत्वे एकत्र काव्यद्वयव्यवहारापत्ति । किञ्चात्रदोषपदेन दोषसामान्याचावस्तद् विशेषाभावो वा विवक्षित । सर्वत्र किञ्चिद्दोषसत्वेन काव्यस्य निर्विषयत्व विरलविषयत्वा प्रसज्ज्येताम् । तद् विशेषाभावोऽपि येनकेनापिरूपेण तत्तद्व्यक्तित्वेन वा नाद्य । व्यधिकरणधर्मावाच्छिन्नाभावस्यके वलान्वयित्वेन सर्वत्रसत्वान्निवेशो विफल । न द्वितीय ॥ तासामननुगतत्वेन लक्षणस्याननुगमात । किञ्चिद्दोषवति व्यक्त्यन्तरदोषाभावेन काव्यत्वापत्या निवेशस्यैव वैयर्थ्याच्च । दोषपदस्यात्रानाकाङ्क्षितत्वनामन्नत्वयोरवच्छिन्ने लाक्षणिकत्वे तात्स्थ्यात्तथैवनाद्वस्थी दिति प्राचीनसम्प्रदाय विरोध यस्यनेकदोष सत्वेन द्वितीयलक्षणमपि न समीचीनम्। रसवदेवकाव्यमिति तृतीयलक्षणमपि वस्त्वलङ्कारप्रधानानामकाव्यत्वापत्यादुष्टम। अत. काव्यस्वरूप निश्चेतु निर्दुष्ट चमत्कारजनकभावना विषयार्थप्रतिपादकशब्द काव्यमिति गृहाण। न च पुत्रस्ते जात । धन दास्यामीत्यादावतिव्याप्ति रमणीयार्थप्रतिपादकत्वादितिवाच्यम । तयोर्लोकाह्लादप्रतिपादकत्वेऽपि लोकोत्तराह्लादाप्रतिपादकत्वेन लक्षणा ना कान्तत्वाम प्रकृते तस्यैव विवक्षितत्वात्। लोकोत्तरत्वञ्चाह्लादगतश्चमत्कारत्वापरपर्यायोऽनुभवसाक्षिको जातिविशेष । न च चमत्कृतार्थाचमत्कृतार्थविषयकसमूहालम्बनज्ञानमादायक्षेप । चमत्कारत्वावच्छिन्नजन्यतानिरूपिजनकतावच्छेदक विषयत्वा वच्छिन्न प्रतिपाद्यता निरूपित प्रतिपादकत्वस्यैव विवक्षितत्वात, प्रतिपादकत्वस्यस्वरूपसम्बन्धविशेषरूपत्वेन रमणीयार्थप्रतिपादकत्वस्या रमणीयार्थप्रतिपादकेऽसत्वाच्च। न च धारावाहिक सकलज्ञानविषयतादृशार्थप्रतिपादके वाक्येऽतिव्याप्ति । चमत्कारत्वावच्छिन्नजन्य तानिरूपितसमवायसम्बन्धावच्छिन्नभावनत्वावच्छिन्नजनकतानिरूपितविषयत्वसम्बन्धावच्छिन्नावच्छेदकतानिरूपित प्रतिपादकत्वसम्बन्धावाच्छितन्नावच्छेदकतानिरूपिताधेयत्वसवच्छा· वच्छिन्नावच्छेदकतावदानुपूर्विमत्वस्यैवाविवक्षितत्वा दित्यत्रमिति।

## २. उद्योते संदिग्धप्रश्नाः

### पं० श्री रतिकान्तझा, भागलपुर

काव्यप्रकाश प्रदीपोद्योतटीकायां कतिपयस्थलेषु स्खलितानि कानिचित समुपलभ्यन्ते तावदस्माभि । तथाहि—पुमान् स्त्रियेति-सूत्रस्यावैकल्पिकत्वेऽपि 'नायिकानायकयो' इत्यत्रैकशेषाभाव , हनधातो रनात्मनेपदित्वेऽपि 'हनिष्ये' इत्यत्रात्मनेपदविधानम ।

तानिचेदानीमौचित्यानौचित्यविचारचातुरीधुरीणानाम प्रश्नशिरोमणीनाम्पुरस्तात् सुविचारार्थ प्रकाश्यन्ते ।

## ३. संस्कृतमेव राष्ट्रभाषा भवितुमर्हति

### पण्डिताश्रीमतीक्षमादेवीराव

पुरातनसार्वभौमानां भरतमान्धातृनहुषप्रमुखाना सभासु कीर्तिविस्तरेण प्रकाशिताया भारतभूमौ गीर्वाण्या परमाभ्युदय । अथ श्रीमद्वाल्मीकिव्यासादीनां कालस्योपवर्णनम् । अर्वाचीनकालेऽपि पर कोटीना पाण्डित्यभापा महाप्रज्ञानां समुदय । तैश्च संस्कृतभाषासरक्षणाय स्वीकृता महन्त प्रयत्ना । ततश्च पाश्चात्यलोक समाक्रान्तायांभारतभूमौ राष्ट्रस्य विध्वस । विध्वसेन च भारतीयेषु स्वस्वधर्माणां विनाश । परकीयवेपभापादीनां स्वीकार । तदानीन्तनी भारतवर्पस्य दुर्दशा । सस्कृतस्याधोगति । संस्कृतभापा या व्यवहारभाषासीत् सा कालक्रमेण ग्रन्थभापा सवृत्ता । ततश्च मन्दबुद्धिभि पामरैर्मृतभाषेन्यपि खलीकृता । सस्कृतभाषा सर्वदेशभापाणा जननी द्राविडभाषां नामपि पुष्टिकरी भाग्यवशात्सांप्रत तदुज्जीवयितारो यशस्विन पण्डिता विद्यन्ते । मनोहराभि सस्कृतपत्रिकाभि सस्कृतस्य समुन्नति संस्कृतप्रचाराय प्रयस्यन्ति । बहुषु मठेषु राजास्थानेषु च तस्य प्रचार । संयुक्तप्रान्तराष्ट्रविभागे मद्रासराष्ट्रविभागे च छात्राणां शास्त्रपरिचयमाण्युत्पादयन्ती गीर्वाणवाणी दरीदृश्यते । अद्यापि विद्वन्मण्डलीषु संस्कृतेनैव व्यवहार । अवहुज्ञा अपि वैदिका. सर्वश्रौतस्मार्तमन्त्राणां गीर्वाणमयत्वात्संस्कृतस्य परिचय रक्षन्ति ।

देववाणीं प्रचारमानेतुं सुलभा उपायाः । हिन्दीभाषया प्रायेणोक्त-

रीया एव व्यवहरन्ति। दाक्षिण्यात्यानामियं नूतना वाणी। तच्छिक्षण-प्रचारे यथा प्रयासो व्ययश्चाङ्गीक्रियते तथा संस्कृतस्यैव प्रचारः क्रियते चेत्तर्हि संस्कृतं सर्वेषां सुलभतरं भविष्यति। संस्कृतस्य काठिन्य-प्रत्याक्षेप । तस्य सौकर्यापादनाय विद्वत्समितेर्नां परिकल्पनम्। सम्प्रति विश्वविद्यालयेषु प्रचलन्ती संस्कृतशिक्षापद्धतिस्तस्याश्च मन्द-फलत्वं। छात्राणां संस्कृतपठने विलक्षणा रूढि । विद्यार्थिना एतादृशेनाभ्यासेन शताधिकैरपि वर्षैः संस्कृतस्याभ्युदयस्याभाव ।

भारतस्य भाग्यवशाद् लब्धस्वातन्त्र्यस्यायमेव संस्कृताभ्युदयाय समुचितोऽवसर । प्रधानमन्त्रिमण्डलेन संस्कृतवाणीमेव राष्ट्रभाषात्वेन परिगृह्य प्रचारयितुं सर्वत प्रयासः कार्य ।

---

## ४. मुरारिपदचिन्ता

### श्रीउमानाथझा, मुजफ्फरपुर

मुरारेर्मैथिलत्वस्थापनप्रयास । ( आभ्यन्तरसाद्दश्येण )। मुरारे समय । पाण्डित्यप्रकर्ष ( पदविवेकेन )। कवित्वप्रकर्ष ( काव्य-विवेचनया )। कुतो मुरारेस्तृतीय पन्था इति प्रसिद्धि.।

## ५. लोकोपकारिकामतन्त्रामपि काव्य-साहित्यव्युपदेशं भजते

### पं० श्रीलक्ष्मीनाथमिश्र, रसलपुर, भागलपुर

समस्त-संस्कृत वाङ्मयस्य साहित्त्वेन व्यपदिष्टत्वात् कामशास्त्र-स्यापि साहित्यत्वेन व्यपदेशे नोदेति काचिदपि विचिकित्सा। रघुवंश किरातार्जुनीयादिमहाकाव्येषुच सुरतविशेषाणां वर्णनं कामागमस्य काव्यार्थत्वं द्रढ़यति। पुरुषार्थचतुर्वर्गे कामस्याप्यवयवत्वेन निर्देशात् अस्योपयोगित्वे न प्रभवति विप्रतिपत्तिलेशोऽपि अपिच, काम खलु शृङ्गारापरपर्याय, शृङ्गारस्य च साहित्ये रसराजत्वेन प्रख्यातत्वात् कामस्य प्रधान्य मनायासमेव ज्ञातुं शक्यते ।

यत्तु केचन कामशास्त्रं घृणास्पदं मन्वते तन्न रुचिरम्, द्वितीया-श्रमे कामागमज्ञानस्यानिवार्यत्वात् । याज्ञवल्क्यवात्स्यायनादिभि .

सम्यक् परीक्षिताया बाह्याभ्यन्तरलक्षणैर्युताया एव कन्याया पाणिग्रहणे प्रशस्तत्वे नोक्तत्वात् तादृशपरीक्षायां कामशास्त्रज्ञानस्यातिशयमुपयोगित्वं स्पष्टमेवाभाति।

इन्द्रियसुखलिप्साया कामे कारणता तु कामशास्त्राचार्य्यैरपि भृशं निन्दिता। धर्माविरुद्धस्य कामस्य श्रेयस्त्वं भगवद्गीतायामप्यङ्गीकृतमेव। प्रणीतश्चेदं शास्त्रं गृहस्थाश्रमप्रविविक्षणां श्रेयसे न तु अश्लीलताप्रचारायेति युक्तमुत्पश्याम। प्रजाजननमूलकस्य परिणयस्य सुतोदय एव साफल्यम्, तत्राभीष्टसिद्धये चानेके योगा प्रोक्ता ये नाम न शक्यन्ते कामागमाध्ययनमन्तरा ज्ञातुम्। अत गार्हस्थ्यप्रवेशात्प्रागेव पुरुषस्य कन्यायाश्च कामोपदेशोऽनिवार्यतामावहति।

कामतंत्रे परदाराधिकारव्यपदेशात्केचन व्यभिचारकमेतच्छास्त्रमिति कथयन्ति, तदलीकम्। यतोहि वात्स्यायन प्रकरणस्यास्य दाररक्षाप्रयोजकतां स्पष्टमेवोक्तवान्। कथ विटा परदारा प्रतारयन्ति कथञ्च ता रक्षणीया इति सर्वं तदध्ययनमन्तरा नैव सुविदित स्यादिति नास्त्यत्र व्यभिचार प्रचार दोपलेशोऽपि।

इत्थं विचारणाया क्रियमाणाया कामशात्र काव्यसाहित्याभिन्नत्वेन द्वितीयाश्रमप्रविविक्षुसमुपकारकत्वेन च व्यहारविद्भिर्न खलु समुपेक्ष्यतां यास्यतीति भृशं विश्वसिम।

## ६. विश्वसाम्राज्ये संस्कृतमहत्त्वम्

अवश्यंभावि विश्वसाम्राज्यम्। अखिललोकाधिपत्यप्राप्तिमन्वयपर संस्कृतसाहित्यम्। भारतीयाप्राक्तनयुगप्रर्तिना च भाषा। आसुरीभाषा भारतीयभाषा च। बृहत्तरभारते संस्कृतस्थानम् मलयभाषा संस्कृतभाषा च दार्शनिक प्रभाव (आधिभौतिक आध्यात्मिकश्च) त्रिभुवनव्यापिनी नीति त्रैकालिक देशकालपरीक्षणञ्च। परिष्कृतोधर्म। बौद्धधर्मप्रभाव। (चाने त्रिविष्टपे जयपाने-ब्रह्मादि देशेच)। अखण्डभारतसरक्षणपरा संस्कृतशक्ति। एकस्य महत सर्वभाषासन्तुलनात्मकस्य संस्कृतकोषस्यावश्यकता।

## ७. अर्वाचीनं संस्कृतसाहित्यम्

संस्कृतसाहित्य स्वाभावत प्राचीनतापक्षपाति। आधुनिकेऽपि काले माघादीनामनुकरणम् गद्य नवीनता समालोचनाप्रवृत्तिः। हिन्दी संस्कृतसाहित्यञ्च। शैथिल्यमापन्न पुराणप्रभाव। खण्डकाव्य प्रवृत्ति। देशभक्तिप्राधान्यम्। मात्यपि सरले गद्ये समासबहुलाप्रवृत्ति-रपि नक्षीणा। आयुर्वेदकाव्यम्। सामाजिकाः प्रश्ना, विधवाविलाप. अत्रापि स्तोत्रप्राधान्य पर वर्णने सर्वथा पार्थक्यम्। आंग्लभाषा-प्रभाव व्याकरणे सारल्यसाधनम् वङ्गसाहित्यप्रभावः। दाक्षिणा-त्याना शैली। अनुवादः।

## ८. रसख्यातिः

प्रथममानन्दानुभववैमत्याभावेऽपि स्थायिभावस्यैव रस-निष्पत्ति ब्रुवाणानामपि तत्तदाचार्याणां रस-स्वरूपे विप्रतिपद्यमा-नानामष्टौ मतानि षष्ठपृष्ठ यावत्प्रदर्शितानि यत्र प्रतिमतम् अनुकार्य-निष्ठस्य सामाजिकनिष्ठस्य वा रत्यादेरास्वाद. रसोऽनुकार्यनिष्ठो वा सामाजिकनिष्ठ ?, रसरसास्वादौ विभिन्नावभिन्नौ वा। आनन्द प्रयोजकश्च कोऽश। कैश्चत्प्रसज्जिता निर्वासिनानामपि रसास्वादा-पत्तिरूपपाद्य प्रतिक्षिप्ता।

प्रत्यक्षज्ञानस्यैवाह्लादहेतुतया श्रीशंकुकेन प्रतिपादित रसस्यानु-मीयमानत्व न चमत्कारायेत्याक्षिप्य श्रीशंकुकमते विषयसौन्दर्यस्यै-वानन्दनिदानतया सुन्दरवस्तु साक्षात्कृतमिव अनुमितमप्याह्लादय-तीति सोदाहरणमुपपाद्य श्रीशंकुकमतसमर्थनम्। आनन्दस्वरूप-निरूप-णोपक्रम यावद् अन्ततोगत्वा ममेषां मते वस्तुसौन्दर्यस्यैवानन्दनिदा-नता आयातीति।

त्रिधानन्दस्वरूप तस्य लौकिकालौकिकत्वे च निरूप्य कस्य कीदृग-भिमतमित्यपि निष्कृस्य सर्वमतेषु लौकिकसुखस्यैवानुभव इति।

विभावत्वलक्षण-प्रदर्शनपुरस्सर समेषां रसास्वादप्रकाराणां क्वचिदपि भ्रमज्ञानमपजीव्यैव प्रवृत्ति प्रदर्श्य तत्तद्दार्शनिकनाम्ना षड्विधानां ख्यातीनां नामस्वरूप-निरूपणपुरस्सरं विभावत्वप्रतीतानुप-योगप्रदर्शनम्।

शाब्दिकदर्शनमनुसृत्य अद्यावधि अन्यैरस्पृष्टया प्रक्रियया रसास्वादनिरूपणम् । तत्र सर्वैरालङ्कारिकैरवश्यं विवेचनीयाना विषयाणां षड्विधप्रश्नरूपेणोपपाद्य प्रतिप्रश्नच "अन्यमतेन शाब्दिकमतेन च समाधि । यत्र समेषा पदार्थाना बुद्धिसत्त्व, बुद्धिसतामेव बुद्धा आस्वाद. । वाच्यवाचकयोरपि बौद्धत्वमेव दुष्यन्तशकुन्तलादिशब्दाना तत्तच्छब्दावच्छिन्ने बुद्धिपरिकल्पिते सामान्याका[illegible] । [illegible]बोधश्च तस्यैव, नतु विशेषाकारस्य तस्मान्नास्मिन्नये साधा[illegible]व्यापारस्यावश्यकता । अन्य सामग्री समुपस्थापितशोकादे शब्दगुणकार्थविशेष्यकतयैवास्वादान्नाह्लादकत्वम्, काव्योत्थापितस्य तु शब्दप्राधान्येनाह्लादयन" आस्वाद इति । विषया सङ्क्षेपेण प्रतिपादिताः ।

## ६. काव्यस्यात्मा रसः

### श्रीधैर्यनाथझा, बम्बई

असारे ससारेऽस्मिन् मनुष्याणां काव्यमेव सद्धर्मप्रयोजकमस्ति "काव्यालापांश्च वर्जयेत्" इत्यसत्काव्य विषयमस्ति । सर्वविधशास्त्र पुराणकाव्यनीतिग्रन्थादि विलोकनेन प्रमाणेन च काव्य विना मनुष्याणां मनुष्यता सभ्यता सुखसामग्रा किमपि न भवति । अत सर्वैर्मनुष्यै काव्यस्य परिशीलन कर्त्तव्यम् । विद्वद्भिश्च कि स्वरूप काव्यम् क आत्मा । का रीतिः । के दोषा । के गुणा । के लकारा. । इत्यादि गवेषणीयम् । काव्यप्रकाशरस काव्यस्यात्मा इति न सिध्यति यत. तत्र काव्यलक्षणे सगुणो शब्दौ इति प्रवर्तते । गुणाश्च आत्मनि भवन्ति न शरीरे शब्दार्थौ काव्यस्य शरीरमिति न तत्र गुणसभावना अस्ति । रीतिरात्मा काव्यस्य इत्यादि न युक्तम् । रीतिरपि शरीर सघटनैव । वक्रोक्ति काव्यजीवितम्, इत्यादि न युक्तम्, वक्रोक्तिरलङ्कारः अलङ्कारश्च शरीरशोभां वधयति यथा लोके तथा काव्यशरीर स्यैवशोभा करोति । अत. काव्यस्यात्मा रस. इत्येवमतसमाचीनमिति । अतएवाग्निपुराणऽवाग्वैदग्ध्यप्रधानेऽपि रस एवात्र जीवितम् । व्यक्ति विवेककारेणापि–काव्यस्यात्मनि अङ्गिनि रसादिरूपे न कस्यापि विमति. । ध्वनिकारेणाप्युक्तम् नहि कवेरितिवृत्तमात्रनिर्वाहेणामलाभ. इत्यादि । कि स्वरूप रसस्य साहित्यदर्पणे

सत्वोद्रेकादखण्डेत्यादि । रसो वै स. इति श्रुतिः । के भेदा रसस्येन शृङ्गारहास्यकरुणरौद्रवीर भयानका इत्यादि ।

---

## १ . केचन प्रश्नाः

### श्रीरतिकान्तझा, भागलपुर

नागोजीमहोदयैर्विनिर्मितायाम् काव्यप्रदीपस्योद्द्योताख्यव्याख्यायाङ्कतिपयस्थलेषु केचन प्रश्ना. सन्ति । तथाहि—

१—चतुर्थोल्लासे ( आनन्दाश्रम मुद्रितस्य प्रदीपोद्द्योतसहितस्य ) काव्यप्रकाशस्य ८९ तमे पृष्ठे रसनिरूपणप्रकरणे "रतिर्नाम प्रीतिश्चित्तवृत्तिविशेष । सा च नायिकानायकयो परस्परदर्शनादिभिर्मिथः प्रथम युगपदयुगपद्वा जायते ।"

२—पञ्चमोल्लासे १९९तमे पृष्ठे आगत्य सम्प्रतीत्याद्यपराङ्गव्यङ्ग्योदाहरणप्रसङ्गे "पादपतनशब्द विनाऽपि नायकनायिकावृत्तान्तप्रतीतेश्च न तस्य प्राधान्यमिति भावः ।"

३—दशमोल्लासे ४७८तमे पृष्ठे समासोक्त्यलङ्कारप्रकरणे "अपि तु तादृशनायकनायिकासम्बन्धिविशिष्टव्यवहारज्ञानात् ।" प्रोक्तेषूद्द्यातस्थवाक्येष्वधोऽङ्कितेष्वंशेष्वेकशेषविधानाभाव. पुमान् स्त्रियेतिसूत्रस्यावैकल्पिकत्वेऽपि कथ युक्त. ?

४—दशमोल्लासे तस्मिन्नेव प्रकरणे ४७९ तमे पृष्ठे "यत्तु चन्द्रऐन्द्रीपदगतलिङ्गाभ्याममभिव्यक्तनायकयो." इत्यादिवाक्ये चन्द्र-ऐन्द्रीत्यशे सधेरविधान संहितायाः समासस्थले नित्यत्वात् कथ तावत् समीचीनम् ?

५—पञ्चमोल्लासे १९७ तमे पृष्ठे जनस्थानेभ्रान्तमित्यादिश्लोकस्य व्याख्यायां काभर्तुरित्यस्य प्रकारान्तरेण कुत्सितभर्तुरितिव्याख्यानम् भर्तृशब्दे परे कुशब्दस्थाने काविधान सूचयतः कस्यापि सूत्रस्योपलब्धेरभावात् कथ तावत् समीचीनम् ?

६—सप्तमोल्लासे २९०तमे पृष्ठे प्रतिकूलवर्णमित्यादिकारिकास्थितेन वाक्यमेव तर्हीति वचनेन प्रतिकूलवर्णत्वादिदोषाणां वाक्यमात्रगतत्वम्प्रकटितन्तत्रभवद्भिः काव्यप्रकाशकारैः ।

एतत्कारिकालिखितविसन्धितादोषविवेचनावसरे च २९४तमे पृष्ठे "अत्रापीदं चिन्त्यम्" इत्यादिना प्रदीपकारैः सकलप्रकारकस्य

विसन्धितादोषस्य समासविधानप्रयुक्तैकपदवत्त्वस्थले पदगतत्वस्यापि संभावना स्फुट प्रतिपादिता।

अत्र च प्रोक्तप्रदीपांशघटकम् अमाध्विति प्रतीकमुपादाय "इदञ्चिन्त्यम् तदैच्छिकत्वस्य शास्त्रानुभवैकत्वात्" इत्युक्तमत्रभवद्भिरुद्द्योतकारैः। तत्कथं समीचीनम्? संहितायाः समासस्थले नित्यत्वेन तत्रेच्छानिबन्धनविश्लेषस्यासाधुताया एव युक्तत्वात्।

७—तत्रैवाल्लासे ३२२तमे पृष्ठे गाहन्तामित्यादि पद्यस्य व्याख्यायाम् हनिष्ये' इतिप्रयागे कथमात्मनेपदविधान साधुत्वसमाधान दधताम्?

८—दशमोल्लासे ५३१तमे पृष्ठे "उदात्त वस्तुन सम्पत्" इत्यत्रत्यमुदात्तमितिप्रतीकमुपादाय" तन्नपुंसकत्वसिद्ध्यर्थम "महताञ्चोपलक्षणमितिवक्ष्यमाणतया नपुंसकानपुंसकयोरेकशेष" इत्ययम्प्रकारः प्रदर्शितस्तावदुद्योतकारैः। परमयमपि प्रकारो व्यर्थ एव प्रतीयते। ग्रन्थान्तरेष्वतिप्राचीनेष्वप्युदात्तालङ्कारबोधकस्योदात्तशब्दस्य स्वतो नपुंसकत्वदर्शनेनात्रापि स्वत एव तत्सिद्धेस्तदर्थमिह प्रकारान्तरानुधावनस्यानावश्यकत्वात्।

# आगमपुराणेतिहासविभागः

## १. आगम-परिचयः

पं० श्रीबटुकनाथशास्त्री खिस्ते, साहित्याचार्यः
सं० कालेज, काशी

### निगमाऽऽगमयोरेकशास्त्रत्वम्

वेद-आगमयोस्तैस्तैस्तदन्तर्गतैरेव वचनैरपौरुषेयस्वत प्रमाणज्ञानरूपता-प्रतिपादनम्। श्रुतिरेव द्विधा भिन्ना इत्युक्ति। एवमुभयो रेकशास्त्रता समर्थनम्। आगम शब्दस्य व्यापकता 'आगम' पदस्य असाधारणः शब्दराशिरूपोऽर्थ इत्युक्तिस्तदर्थे प्रमाणोपन्यासः। 'तन्त्र'-पदस्यचार्थविवरणम्। आगमाना प्रवृत्ति. भारतीयसंस्कृतेरध्यात्मवादप्राधान्यम्। मोक्षस्य सकलशास्त्रफलरूपता प्रतिपादनम्। तदवाप्तये शास्त्राणां निश्रेणिकाक्रमेणाऽव-स्थिति वर्णनम्। अधिकारिविभेदेन

शास्त्राणां मिथो विरोध परिहार प्रतिपादनम् । ज्ञानभूमिकासु भक्तेरव-स्थितिस्तत्रैवाऽऽगमानामुपयोग. । अद्वैत भक्तेरेव मुख्यत्वम् । आग-मानां प्रवृत्तौ विशेषतो भगवत कारुण्यस्य हेतुता । आगमेष्वधिकारि विभागश्चागमेषु लब्धदीक्षस्यैवाधिकारिता । तत्राऽप्यधिकार-तारतम्य निर्देशः । श्रुतिभ्रष्टानामपि क्वचिदधिकारिता प्रतिपादनम् । आगमाना विशेषत. सर्वेषामाश्रयणीयत्वस्य वर्णनम् । आगमानां स्वरूपभेद सामान्यतस्त्रिधा भेदवर्णनम् । इति कर्तव्यता विषये गुरु संप्रदायमात्रस्य प्रामाण्यम् । काम्य कर्म-विवेक । शास्त्रस्यास्य गुरुमु-खैकगम्यत्वाद्गुरोराश्रयणीयता-वर्णनम । निबन्धोप सहार ।

## २. कीर्तन-कल्लोलः

### पं० श्रीसूर्य्यनारायणभक्त, दैठी

प्रकीर्तनपरिभाषणम् । कलियुगेऽस्मिन कीर्तनमेव सर्वसुलभ भवाब्धि सतरणसाधनमिति सप्रमाणपरिदर्शनम । भक्तिसामान्यलक्षण-कथनम् । यस्या. द्वितीयेऽस्मिन साधने कीर्तने तादृशी अलौकिकी शक्तिरिति प्रतिपादनम् । नित्य पूर्णसुखप्राप्तिश्च कीर्तनेनैवेति सयुक्तिकं प्रतिपादनम । प्रवृत्तेहि कीर्तने परमेश्वर. सपद्येव भक्तहृदय प्रविश्या-शेषमलान्यपकृष्य दर्शनपथं याति इति प्रतिपादनम । ततश्च भगवत् कीर्तन रहित वचोनिरर्थकमिति दिग्दर्शनम् ततश्च भगवद्कीर्तन माहात्म्यस्य सविशेष प्रतिपादनमजामिलोद्धारधृत यमविष्णुदूत-वाक्यादिभि । कीर्तनवलेन पापाचरण नवरमिति सयुक्तिक प्रतिपादनम संकीर्तन कतिचित्प्रियमाना नामपरिगणनम् येन तद्लौकिकता सपदि गच्छतीति प्रतिपादनम् । कीर्तनावस्थाविशेषप्रतिपादनञ्च । कीर्तने मनोनिग्रहः सुलभ. सामाजिकसङ्गठनमपि सुलभमिति प्रतिपादयन् देवादिभिः कृतास्तुतिरपि कीर्तनमेवेति च प्रतिपादयन् कतिचित्कीर्तन-भक्तानां प्राचीनानां नामानि परिगणयन् कीर्तन सर्वजनसुलभमित्युप-संहारः ।

## ३. पुराण परामर्शः

### श्रीकुलानन्दझा 'कुलेश'

पुराणस्य-सारत्व प्रतिपादनम्। पुराणस्य-वेदोपकारकत्व धर्म स्थानत्वयोर्निरनपणम्। सकलानि पुराणानि-ब्रह्मैव प्रतिपादयन्ति, तदर्थमेव सर्वेषामायास। एकमेवाद्वितीय ब्रह्म-इति कथनम्। तेन-पुराणानां परस्पर-विरोध परिहार। श्रीमद्भागवतादौ रथेन-वायुवेगेने-त्यादौ सभावितस्य विरोधस्यपरिहार। वेदादि-विरोध-परिहार। पुराणाना वेदरूपत्व कथनञ्च। पुराणानामनादित्वऽपौरुषेयत्वादि-कथनम् पुराणानां प्रयोजनं स्पष्टीकृतम्।

## ४. शक्तिसारः

### श्रीराधाकान्तठाकुर टभका, दरभंगा

कार्यभेदेनप्रतिकाल सर्वा शक्तय एकस्यामेवव्यक्तौ सम्पन्ने नष्टे वा कार्ये कार्यारम्भावस्थायाश्च निवर्त्तन्ते प्रवर्त्तन्ते तथापि मोहाच्छन्नचित्तास्ता शक्ती तान् शक्तिमतश्च नजानन्तिलोका तेषा विशेषत शक्त्युपासकानां सुलभोपायेनशक्तिपरिचयार्थ निबध्नामि पुराणोक्तं शक्तिसारम्।

## ५. आगमोक्तपूजादर्पणम्

### पं० श्रीश्यामानन्दझा, दरभंगा

तत्र प्रथम व्युत्पत्ति, पर्यायनिर्देशपूर्वक पूजापरिभाषणम्। ततश्च कलियुगीय जीवार्थमागमोक्तैव पूजा तूर्ण फलदेति सप्रमाण तत्परिदर्शनम्। ततोबाह्यमानसभेदेन द्विधा भेदितायास्तत्र बाह्य-पूजाया अभिगमन-उपादान-इज्यास्वाध्याय,-योग इति पञ्चविध-भेददर्शनम् पुनश्च 'कायिक, वाचिक, मानसिक', इतित्रिधाविभक्ताया पूजाया नित्य, नैमित्तिक, काम्य, इति त्रिविधभेदकथनम्।

असमर्थ पक्षे च साधनाभाविनी, त्रासी, दौर्बोधी, सौतकी, आतुरी इति पञ्चविधभेदव्याख्यानकरणम्। अथ पूजाया व्यापकता प्रदर्शन-

पूर्वक पूजाधार निरूपणम्, ततः प्रतिमाभेदप्रदर्शनञ्च। ततः पूजाया अवश्यकर्त्तव्यता निरूपणपूर्वक दीक्षाग्रहणस्यावश्यकता निरूपणम्-तच्च ( दीक्षाग्रहणम् ) न श्रीगुरुमन्तरेति श्रीगुरुविशेषता प्रदर्शनम्। अथ आगमोक्त पूजाया. पूर्वाङ्ग कृत्यनिदर्शनम्। प्रातः कृत्य, भूतशुद्धि, मातृका न्यासादेरावश्यकता कथनम्। मुद्राभावार्थकथनम्, पूजाया-मष्टादश, षोडश, दश पञ्चोपचार प्रदर्शनञ्च ततश्च आवरणदेवता पूजनकथनपुरःसरपूजाङ्गत्वेन जपपूर्वकृत्य प्रदर्शनम। ततः पूजा-सङ्केतनिदर्शनपूर्वक सर्वदेवाऽभेद • प्रदर्शनम्। ततश्च सयुक्तिक ( पूजयालभतेम् पूजाम् ) इति पूजाया प्रस्फुटैहिकफलप्रापकत्वमपीति प्रतिपादयन्नागमोक्तपूजयासकलं सिद्धयेदित्युपसंहरणम्।

## ६. तन्त्र रहस्यम्

पं० श्रीजगदीशठाकुर, सं० महाविद्यालय, मुजफ्फरपुर

अत्रहि तन्त्रशास्त्रे प्रतिपादितानां विषयाणां सङ्क्षेपेत परिचयः। प्रथम शिष्टाचार परिग्रहीतत्वात् मङ्गलाऽचार। ततोऽग्ने तन्त्रशास्त्र-सार्थकता, फलवत्ताप्रतिपादनम्।

अन्यशास्त्रापेक्षयाऽगमशास्त्रस्य महत्व प्रतिपादनम्। तत्प्रसंगे-नास्य सर्वशास्त्रापेक्षया प्राथम्य प्रतिपादनम्। ततो मन्त्रशब्दाना-निर्वचनप्रसंगेन कतिपय मन्त्रणामर्थ निरूपणम्। तिरोहितानां मन्त्रा-णामातृकवर्णात्मकेभ्य श्लोकेभ्यस्तान्त्रिककोशसहकारेणोद्धर-णम्। मन्त्रणां वीज, मन्त्र, मालामन्त्र, स्तोत्ररूपताप्रतिपादनमक्षर संख्यानुसारेण।

अनन्तर षट्सु कर्मसु विनियुक्तानां मन्त्राणां पुस्त्री नपुंसकालङ्गता प्रतिपादनं षटसु कर्मसु सालङ्गानां मन्त्राणां प्रयोगनिरूपणम्।

छिन्नत्वादि दोषदुष्टानां मन्त्रणां फलरहितत्वेनतत्परिचयाय-साकल्येन दोषाणां परिगणनं तेषां दोषाणां लक्षणनिरूपणम्।

दुष्टानां मन्त्राणां दोषपरिहाराय जननादिदशविधमन्त्रसस्कार-निरूपणम् तेषां सस्कराणां नामानि तदिति कर्त्तव्यता च।

षट्कर्म पदानामर्थनिरूपणम् तेषां विश्लेषणं, वर्गीकरणञ्च। सर्वेषामेव मन्त्राणां जपे मालायाः प्राधान्यात करमालादि भेदेन

त्रिधाविभक्तानां मालानां निरूपणम् मालानुसारेण मन्त्रजे फलविशेषकथनञ्च । ग्रथितानामेव मणिमालाना मालात्वेन जपोपयोगितया मालाग्रन्थनप्रकारनिरूपणम । तत्र भिन्नभिन्नकर्मसु मालाग्रन्थनसूत्राणा वर्णद्रव्यनिरूपणम ।

जपे देशकालाधिकारिण विचार आवश्यकोऽन्यथा प्रजप्ता अपि मन्त्रा न फल जनयन्तीति कृत्वा यत्र स्थाने प्रजप्ता मन्त्रा साधकेभ्य फल प्रयच्छन्ति तेषा जपोपयोगिता स्थानाना निरूपणम । तत्र तत्र स्थाने प्रजप्याना मन्त्राणा वर्गीकरण ञ्च ।

केषा केषा कर्मणा सम्पादने जप्यमान मन्त्र मालाना सञ्चालनार्थमगुंलीना नियम । अङ्गुलिसङ्कारेण मालासञ्चालन निरूपणम् । पूर्वादि दिशा जपकर्मणि प्राशस्त्यमिति नियमेन जपकरणसमये साधकस्य दिङ्मुखता प्रतिपादनम् तदनुसार पट्कर्मकरण निरूपणञ्च । पट्सु कर्मसु मन्त्रजपसमये ध्येयाना देवताना स्वरूपनिरूपणम् । तासा ध्यानप्रकारप्रदर्शनञ्च । पट् कर्म सम्पादनाय क्रियमाणे जपे जपप्रारम्भसमये प्रशस्ताना तिथीना योगादीनाञ्च निरूपणम् । सर्वविधसस्कारेण सस्कृता अपि मन्त्रा यदि साधकेभ्य फलं न प्रयच्छेयुस्तस्यामवस्थाया मन्त्राणामुत्तेजनकरणनिरूपणम् ।

पण्णा कर्मणामन्ते मन्त्राणा दशाशेन हवन विहितम् । तत्र कस्मिन् कर्मणि कि हवनद्रव्य विहितमिति प्रदर्शनमुखेन हवनद्रव्य निरूपणम् । सर्वेषु कर्मसु मन्त्रजपे मन्त्रदेवतापूजनमावश्यकमिति पूजाधारभूतस्य यन्त्रस्याप्रतिपादनम् । अनन्तर यन्त्राधार पात्रनिरूपणम् । यन्त्राधारपतिपादनमुखेन यन्त्रलेखनोपयोगिना द्रव्याणा निरूपणम् । यन्त्रलिखन पट्सु कर्मसु प्रशस्ताना लेखनीना विचारस्तस्या द्रव्यनिरूपणञ्च । यन्त्र विन्दु, त्रिकोणादीनामवयवाना साकल्येन परिगणन, तन्निरूपणञ्च । ततो नानाविधमन्त्रप्रयोगेण विविधानामाश्चर्यजनककार्याणा प्रदर्शनम । नानाविधद्रव्यसयोगेन चाश्चर्यजनकवस्तुप्रदर्शननिरूपणञ्च ।

---

## ७. चण्डीशब्दार्थविचार:

### श्रीकलानाथमिश्र, पिलखवाड, दरभगा

चण्डी नाम परब्रह्मण पट्टमहिषी देवता । चण्डभानुरित्यत्र इयन्तानवच्छिन्नासाधारणगुणशालिपरत्वेन चण्डपदस्य प्रयोग-

दर्शात् । इयत्तायाश्च देशकालवस्तुकृतत्रैविध्येन तादृश परिच्छेद-त्रितयराहित्यस्य परब्रह्मैकलिङ्गत्वात् । एकमेव ब्रह्म अनादिसिद्धया मायया धर्मीधर्मश्चेति द्विविधमभूत्। तस्यैव धर्मत्वाच्छक्तिरिति सञ्ज्ञा। स एव धर्म शङ्करभवानीभेदेन द्विविधो भूत्वा जगत सृष्टि स्थितिलयतिरोधानानुग्रहात्मककृत्यपञ्चककर्त्ताऽभूत्। जपाकुसुमस्यैव रञ्जनकर्त्तृत्वेऽपि रागाश्रयत्वेन मात्रा स्फटिकस्यैव शुद्धस्याऽपि धर्मिण सान्निध्यमात्रेण कर्त्तृत्वव्यवहार । तद्गतो धर्मोऽपि न जडो न जीव अपितु 'चिति स्वतन्त्रा विश्वसिद्धिहेतु' इत्यादि शक्ति-सूत्रोक्तस्वरूप ब्रह्मैवेत्युपनिषत्सिद्धान्त ।

---

## ८. अथ पुराणेषु नवधा भगवद्भक्तौ कीर्तनस्यैव मोक्षोपायत्वम्

### पं० श्रीरामलोचनझा, वरदेपुर

इह जगति मनुष्यप्रभृतय सर्वे स्थावरान्ता प्रादुर्भवन्तो दृश्यते तथा स्वेषु स्वेष्वधिकारेषु नियत वर्तते तस्यकारणीभूतोधर्म इत्याचक्षते परमर्षय । तथा चतुर्विधपुरुपार्थेषु प्रथमपुरुपार्थोधर्म श्रूयते। परन्तु तस्य धर्मस्याप्रत्यक्षत्वात्स्वबुद्धया य धर्मोऽयमधर्मश्चेति न निरूपयितुं शक्यते । अतो बहुविवदमानेषु 'आचार परमो धर्म' इति निश्चित । परन्तु दर्शनादिकमज्ञातानामालस्योपयुक्तानां कलिधर्मलिप्त-जीवानां मोक्षाय भक्तिरूपैकोमार्गो भगवता दर्शित । तथाहि भक्त्या समाकृष्टो हरि सर्वेपामेव काम्यफल सम्पादयति। तर्हि कलौत्वन्य साधनस्यातिकाठिन्याद्भक्तिरेकैव मोक्षदेति सिद्धान्त । अहो का नाम भक्ति सा कति विधेत्युच्यते। पित्रादिषु गुरुजनेषु भगत्स्वपि-अनुरागो नाम भक्ति । सा च नवधा। श्रवण, कीर्तन, स्मरण, पादसेवन, अर्चन, वन्दन, दास्य, सख्य, आत्मनिवेदनम्। किन्तु नवधाभक्तौ कीर्तस्यैव मोक्षत्वमिति सकलदर्शनादिसारभूतत्वात्। तथा मनुष्याणां समया-ल्पत्वाच्च, तत्र महात्मा प्रह्लाद प्रथममुदाहरणम्। अय तावदनेकानि दुःखानि परिभूय भगवन्नामकीर्तनेन सायुज्यमुक्ति प्राप। अतएव भगवद्भक्तौ कीर्तनस्य मोक्षोपायत्वमिति सिद्धम्। एवमनेकान्युदा-हरणान्यजामिलोपाख्यादीनि सन्तीति ज्ञातव्यम्।

## ६. आगमक उपयोगिता ओ पञ्चमकार

श्रीयुगलकिशोर मिश्र, अन्धराठाढी

सत्ययुगमे मनुष्यगण वेदोक्त मार्गस चलैतछल त्रेतायुगमे धर्मक एक चरण ह्रास होयवाक हेतु वेदोक्तमार्ग स इष्टसाधन नहि देखि वेदक आंशिक अर्थयुक्त स्मृतिद्वारा इष्टसाधन करयलागल, द्वापरमे धर्मक दूचरण नष्ट होयवाक कारण स्मृत्युक्त धर्मक असाध्य जानि संहिताक सहायता स इष्टसाधन करय लागल कलियुग मे एक-चरणमात्र अवशेष रहिगेल पापक आचार वहुत वढ़िगेल लोकदु ख स पीडित होमय लागल सन्ध्यावदनादि स रहित, भक्ष्याभक्ष्य, गम्यागम्य, स्पर्शास्पर्श, ओ पानादिक विचार स शून्य केवल शिश्नोदरपरायण, जनमे वचकना वाहुल्य देखि, तथा अपन कर्मरूप डोरीस वान्धल जन्ममरणरूप प्रवाहमे पतित, ससाररूप समुद्रस पार होयबामे असमर्थ जीव के उद्धारक हेतु श्रीशिवजीद्वारा आगमशास्त्रक रचना भेल। एहिमे आगत, गत, मत शब्दक आदि अक्षर जोडलास आगम वा तन्त्र भेल।

कलियुगमे आगमशास्त्र के त्यागि अन्यमार्गावलवी के अभीष्ट-सिद्धि नहि होइछ। ऊसर खेतमे वीया वाओग समान, आगमोक्तमन्त्र शीघ्रफलप्रद होइछ एहि लोक मे विविध आनद कराय अन्त मे ब्रह्मपद प्राप्ति करवैछ। विधिपूर्वक अनुष्ठानकयला स एक राति मे शवसाधना-सिद्धभय ब्रह्मपदके लाभकरैछ। वेदादि शास्त्र मे नियन्त्रणवाहुल्य देखि कलियुगमे अल्पायु, अल्पवित्त, अल्पबुद्धी मनुष्यक हेतु आगमक रचना भेल यथा होमिओपैथिकदवा रोगीके खाय मे सुमधुर तथा रोग-निस्तारभय जाइछ तहिना भोगासक्त जीवक वास्ते भोगविलास करवैत अल्पहि समयमे मोक्षक पथमे सरल उपाय वनौलन्हि।

महानिर्वाणतन्त्रमे मनुष्यक उद्धारक हेतु ब्रह्ममत्र अछि ओहि-मन्त्रस खाद्यपेयादिपदार्थ अभिमन्त्रित तथा ईश्वरार्पण कयलास पवित्रभय जाइछ ओ प्रसाद भोजन कयलास सभपाप स विमुक्तभए जाइछ। आगम शास्त्र प्राचीन थिक सत्ययुगादिओ मे तन्त्रक साधक देखना जाइछ। सत्ययुगमे मार्कण्डेयमुनिप्रणीतसप्तशती मे प्रकृतिक कर्तृत्व देखना जाइछ त्रेता मे रामसीता। विषय उपनिषद्मे वर्णन

कयलअछि। उपनिषद्के अवलम्बन कयवाल्मीकिरामायण रचना कयलन्हि।

भावहीनसाधक कोनो साधना मे सिद्धिलाभनहि कय सकैछ तैं भावाधिकारी होयब आवश्यक थिक भाव की थिक-पशुभाव, वीरभाव, तथा दीव्यभाव, वा तामसिक, राजसिक, सात्विक, अथवा अधम, मध्यम उत्तम।

पशुभावप्रथमाधिकारी। पशुभावमे सिद्धिप्राप्त साधक वीर भाव क अधिकारी, वीर भाव मे सिद्धिप्राप्त साधक दिव्य भावक अधिकारी।

मद्य, मांस, माछ, मुद्रा आर मैथुन ई पञ्चमकारक शक्तिक पूजा कयला स महापातककेर नाश तथा पुनर्जन्म स रहितभय जाइछ। पञ्च-मकार तीन प्रकारक अछि अनुकल्प, प्रत्यक्ष, तथा सूक्ष्म।

पशुभावाधिकारी अनुकल्प पचमकार स। वीरभावाधिकारी प्रत्यक्षपञ्चमकार स। दिव्यभावाधिकारी सूक्ष्म पच मकार स आराधना करब उचित। प्रत्येकभाव मे तीन आचार अछि पशुभाव मे वेदाचार वैष्णवाचार शैवाचार। वीरभाव मे दक्षिणाचार सिद्धान्ताचार वामाचार। दीव्यभावमे अघोराचार, योगाचार कौलाचार। ई नवो आचार उत्तरोत्तर पैध थीक। कौलाचार सन पैघ दोसर आचार नहि अछि। टेढ़ ओ सोझगातिमे प्राप्त नद सब जेना समुद्रम प्रवेश करैछ तहिना नानाप्रकार क धर्म कौलाचार मे प्रवेशकरैछ।

## १०. उपासना-तत्वम्

श्रीनागेश्वरझा, हिरणी, दरभंगा

विविधवासनानिबद्धाना ससारविकारलोलपाना मानवाना परमसुखदायकनानाविधदेवोपासना कथमिव विधातव्या। उपासिते च देवे कि फल लभ्यते, भूतप्रेतादीनामुपासना कैर्विधीयते। उपसितेन भूतादिगणेन किमपि फल तैर्लभ्यते न वा, त्र्विषयेऽस्मिन निबन्धेयुक्तियुक्त प्रमाण सिद्धलौकिकदृष्टान्तश्च गियते। देवाना संख्या विषये निरुक्तयजुर्वेदादिप्रमाणपूर्वकोपानिवद्धाविषया सन्ति.। कस्य देवस्य स्थान क्व विद्यते तस्याकारचिन्तनमथच विदुषां देवता

प्रतिपादनं बहूनामर्वाचीनानामभिमतमस्ति। तस्य खण्डनमुपनिषद्-वेदं प्रतिपादितमन्त्रेण सकल वर्तते। ब्रह्मण पृथक् स्थितित्व च कथं सिद्ध्यति। अत्रोपनिषद्स्मृतिप्रमाणद्वाराप्रदर्शितसिद्धान्तश्चात्रोप-वर्णितो विद्यते। कस्य देवस्य कियत्काल स्थितिर्भवति। नित्य-पितृगण देवता गण्यते न वा तस्य स्थिरीकरण, तथाऽधममध्यमोत्तम-प्रभृतीना मानवानमुपासनार्थमधमध्यमोत्तमवर्गीया देवास्सन्ति न वा सन्तिचेत् कथ च केन पूजयन्ति। मध्यमाधमवर्गीया जना निराकारं परमात्मान पूजयन्ति नवेति पूजयन्ति चेत तेषा साध्य पूजन भवति-न वा यदिभवति तद्विशुद्धसत्वानामेव माध्यस्यान्नन्येषा तर्हि तदर्थ-मुपाय कश्चित विद्यते न वा यदि विद्यते कश्च स। मूर्तिपूजन, यदि-मूर्तिपूजनमेव तेषा साधनभूत तर्हि कस्मिन् द्रव्येमूर्तिपूजन विधा-तव्यम्। तत्रायमन्देहश्च सजायते द्रव्यपदार्थपूजनेन मूर्तिपूजन फल लभ्यते नवा लभ्यते। चेत् तदस्थदेवपूजनेन वातद्रव्यपूजनेनदेव-पूजन फल लभ्यते। एव क्रमेण सर्वमुपासनादिवसप्तकर्मातिरहस्य-मद्य निबन्ध विलिख्य विविधवासनाविरहिताना जनाना मार्ग प्रदर्शित अन्तान्येषामर्ममतानुयायिना मत निरस्य साकल्यनातिसङ्क्षे-पेण निरूपितस्तत्र नानाविधमसमाल्पबुद्धिजन्यदोषयुक्तस्य निबन्धस्य-शान्तीययादया दृष्टया च दोषोद्धारपूर्वकोत्साहप्रवर्द्धकाशीर्वादवाक्य-प्रदानेन सकला त्रुटि क्षमेयुस्सज्जना इति शम।

---

# पुराणे तन्त्रे च भगवती लक्ष्मीः

## श्रीनरेन्द्रनाथचौधुरी

भगवत्या लक्ष्म्या प्रसिद्धिरस्मिन् भारते सुतरा सर्वत्रैव वर्तते। श्रीसूक्तादिषु देवीय सम्यक् समाम्नायते। अस्या पूजनं माहात्म्य च पुराणे तन्त्रेऽपि विशेषेण वर्णितम्।

इय हि समुद्रमन्थनसमये प्रादुरभूत्। अस्या ध्यानात् कर्मजात मूर्तिरहस्यं च सम्यगवगम्यते। एषा खलु विष्णोर्नारायणस्य पत्नी। अस्या.सपत्नी वाग्देवी सरस्वती विद्यते। इय तावत् कोजागरपौर्ण-मास्या विशेषेण पूज्यते। तस्या निशाया "मर्त्यैर्जागरण चरे" दिति विधान खलु श्रुति-भारतादिस्मृतिविरुद्धमिव प्रतिभाति। यक्षराजो धनाधिपः कुबेरोऽपि लक्ष्म्या सार्धमर्च्यते। पर लक्ष्मीपुत्रोऽयमिति

मतं न समीचीनं प्रतीयते। तन्त्रशास्त्रे वर्णिता लक्ष्मी, कमला वा, काल्यादिदशमहाविद्यास्वन्यतमा विद्यते। लक्ष्मीर्हि सूर्यमण्डलसम्बन्धिनी नाम देवतास्ति। वैदिकी उषा एव पुराणे तन्त्रे च लक्ष्मी लक्ष्म्यभिन्ना सरस्वती च सजाता। तथा हि—उषा देवी खलु 'सूर्यस्य योषा' 'सूर्या' च कास्ति। तेन च सूर्यरूपविशेषस्य मध्याकाशवर्तिनी व्यापकस्य विष्णो पत्नीयमिति सिध्यति। उषा हि 'हिरण्यवर्णा', 'शुभ्रा', धनदा, ज्ञानदा, चेति वेदे समुपवर्णिता। इयमेव पुराणे तन्त्रे च ध्यानादिसौकर्यार्थं लक्ष्मी सरस्वती च सपन्ना अतो लक्ष्मी सरस्वती चैका एव देवता, रूपकर्मादिभेदेन, पृथक् प्रतिपादिता। मतमेतत् श्रीसूक्तात् सुतरां पुष्टिमवाप्नोति।

अथ नारायणध्यानादिभ्यस्तावत् पौराणिको विष्णु खलु सवितृमण्डलमध्यवर्ती देव इत्यवगम्यते। तेन च सूर्याद्भिन्नो वैदिको विष्णुरेव पुराणे तन्त्रे च उषस खल्वभिन्नाया लक्ष्म्या सरस्वत्याश्च पतिरस्तीति मत समञ्जसमेव सपद्यते।

अथेय लक्ष्मी खलु कालशक्तेः काल्या, कर्मभेदात् कमलामूर्त्या रूपान्तरमेवास्ति। इय हि भगवत सूर्यस्य परा शक्ति, पत्नीरूपा, सरस्वत्यभिन्ना, श्रीमदुपम परिणामभूता, परमेश्वरी श्रेय प्रेयश्चानुदिन वितरति। देवीय यथार्थतो नैव स्त्री न वा पुमानस्ति। तथापि साधकानां साधनादिसौकर्यार्थं मातृरूपेणैव ध्यायते पूज्यते च। अस्या स्वरूपस्य विज्ञानात साधकस्य शक्त्यभिन्नब्रह्मरूपत्वमेव सिध्यति।

अथैतदेव भगवत्या लक्ष्म्यास्तत्त्व रहस्य च विभाति।

## १२. भक्ति-सुधाम्बुधिः

पं० श्रीसीतारामझा, दरभंगा

अत्र प्रथम, ज्ञानी, अल्पज्ञानी, मूढ़, इति त्रिविधाधिकारिणां कृते क्रमेण, ज्ञानमार्ग, भक्तिमार्ग, कर्ममार्ग कथनपूर्वक विविधभक्तजनानुभवानुकूल, स्वानुभूतिसारपुर सरभक्तिपरिभाषणम।

ततश्च शास्त्रीयनियमसाहित्यासाहित्याभ्या तस्या शास्त्रीय, अशास्त्रीय, इतिमार्गद्वयनिरूपणम्, निर्गुणा (परा) इति, सगुणा (अपरा) इति च नामकथनम्।

ततश्च तस्याः श्रवणादि नवधाभेदसंक्षेपप्रदर्शनम् , भक्तिवशेश्वररूपादिप्रकटनसङ्क्षेपकथनम्, चिन्तामण्यादिव वस्य तथाकरणकथनम्, ज्ञानरहितानामपि भजतांकृते, ईश्वरेण कृपया बुद्धियोगप्रदानपरिदर्शनञ्च ।

ततश्च ज्ञानिभिरगम्यस्यापीश्वरस्य भक्त्याऽतिसौकर्येण बोधगम्यत्वप्रतिपादनम् । ततश्च परमगोपनीयमनुष्यलीलाकरणमपीश्वरस्य कदाचित् भक्तमरक्षणादिसरभसभ्रमादिना विस्मृतंभवति, ततश्च प्रकटतांयाति, महापुरुषस्यापि तस्याऽसावधानतेति कथनम् । ततश्च भक्तिज्ञानयोर्मध्ये ज्ञानस्य सर्वशास्त्रोक्तिजातबलेन महत्वे प्रतिपादितेऽपिज्ञानजनकत्व, विलक्षणदैवीयदयाजनकत्वगुणयुक्तया भक्त्या निर्विघ्न लोकाभीष्टमरक्षणोपाख्यानदिग्दर्शनम् । ततश्च ज्ञानिभिरपि विघ्नवारक्षणाय विलक्षणानन्दानुभवाय च भक्तिराद्रियतेइति सङ्क्षिप्तकथनम् । ततश्च ईश्वरानुरागसाधने गुणविशेषाणां प्रयोजनराहित्यदर्शनम् । ततश्च नवधाविभक्तभक्तिसाधने स्मरणस्य सुकरत्वादिना श्रेष्ठत्वप्रदर्शनम् , लौकिककर्तव्यजातेन सहायितत्कर्तव्यस्य निर्वाहोपदेशप्रदर्शनञ्च । ततश्च कथङ्कृता स्मृति फलदा भवतीति स्मरणदशाविशेषप्रतिपादनपूर्वकदैवीलीलालालित्यनिदर्शनोपसहारसङ्क्षेप ।

---

# १३. पौराणिक-सृष्टिक्रमनिरूपणम्

श्रीतेजनाथझा, मधुबनी

यदा परमेश्वरो लोकान सिसृक्षति तदा स स्वस्मात्तिस्रो विभूतीः पुरुषप्रधानकालानुद्भावयति । तत स्वसान्निध्येन गन्धो मन इव स स्वांशो प्रधानपुरुषौ स्वकालशक्त्युद्बुद्धमेच्छाशक्त्या संयोज्य क्षोभयतिसृष्ट्युन्मुखौ करोति । सत्येव प्रधानात सात्त्विकराजसतामसभेदेन त्रिविध महत्तत्त्वमुद्भवति । एतच्च बीज त्वगिव प्रधानं समन्तादावृणोति । अनयैव रीत्या प्रकृतय स्वाम्य उत्पन्नान् सर्वान् व्याप्नुवन्ति । ईश्वरेच्छया क्षुब्धाद्धि महतस्वदनुगुणक सत्त्विकराजसतामसभेदेन त्रिविधोऽहङ्कार प्रादुर्भवति । तत्र सात्त्विकोऽहङ्कारो वैकारिको राजसस्तैजसस्तामसश्च भूतादि कथ्यते । क्षुभ्यन् भूतादि शब्दतन्मात्र सृजति । तस्माच्च स्थूलाकाश उत्पद्यते । भूतादिश्च शब्दतन्मात्रं

स्थूलाकाशञ्च व्याप्नोति। अनेनेदमपि बोध्यम्-पूर्व-पूर्वतन्मात्रमुत्तरोत्तरतन्मात्रन्तद्विशेषञ्चावृणोति। क्षुब्ध आकाश स्पर्शतन्मात्रमुत्पादयति। तस्माच्च वायुरुत्पद्यते। ततो विकुर्वाणो वायू रूपतन्मात्रमाविष्करोति। ततश्च ज्योतिराविर्भवति। एव क्षुभ्यतो ज्योतिषो रसतन्मात्रमुत्पद्यते, तस्माच्च जलम्, जलाद्गन्धतन्मात्र तस्माच्च पृथिवी जायते। अत्रेदमनुसन्धेयम – पूर्वपूर्वतन्मात्रसहितादेवोत्तरोत्तरतन्मात्रस्य तस्माच्च तत्तद्विशेषाणा भूतानामुत्पत्तिर्भवति न तु केवलात्। सत्येव वाय्वादिभूतविशेषाणान्तत्तद्गुणाधिक्ययोगात्कारणक्रमेया कार्येषु गुणा भवन्ति। वैकारिकाहङ्कारात्तु पञ्चतन्मात्रसहायात क्रमेण पञ्चज्ञानेन्द्रियाणा तस्मादेव च तत्सहायात्पञ्चकर्मेन्द्रियाणा च सृष्टि। पञ्चतन्मात्राणामसहायात्तु मनस (अन्त करणस्य) सृष्टि।

अथैव जातेषु भूतेषु तानि प्रत्येक द्विधा भवति। एकमर्द्ध स्वस्वरूपेण तिष्ठति, अपरमर्द्ध पुनश्चतुर्धा भवति। इमे विभक्ता अवयवाः प्रत्येक स्वभिन्नचतुर्भूतेषु प्रविशति। पञ्चीकरणेन नैतान्येक सघातानि जायन्ते किन्तु भूतानामष्टमो भाग स्वस्वरूपेण स्थितान् भूतार्द्धभागान् गत्वा संमिलति।

ततः सहति विना पञ्चभूतास्ते पृथग्भूता अवकाशशोषणदहनादि भिन्नशक्तियुक्ता नानावीर्या अन्योऽन्यसाहाय्यमप्राप्य प्रजाविशिष्टभोगायतनानि शरीराण्यणु वा स्रष्टुमशक्ता भवन्ति, किन्तु यदा प्रधान विशिष्टपरिणामोन्मुख भवत्येव तेषु पुण्यपापपरिष्वक्तजीवानुप्रवशो भवति तदा ते परस्परसमाश्रयादन्याऽन्यसश्लेषमेत्यैकीभूता एकसघातलच्या सन्त अणुमुत्पादयन्ति। समवृत्तन्तदणु क्रमेण विवृद्धसत्प्राकृत हिरण्यगर्भस्य ब्रह्मण स्थानं सम्पद्यते। तत्रव्यक्ताव्यक्तस्वरूपईश्वरो रजोगुणात्मकब्रह्मस्वरूपेणावतिष्ठते जगत. सर्गार्थम्, पालनार्थञ्च सत्त्वगुणात्मकविष्णुस्वरूपेण, सहाराय चैवमस्य जगत तमोगुणकशिवस्वरूपेण।

अथासावीश्वरो ब्रह्मरूपधरो रजसावृतो जगत. सृष्टि करोति। कल्पादिषु सृष्टि चिन्तयतो हि तस्मात्सर्गादावनवधानमूलस्तमोमयोऽविद्यारूपः सर्ग. प्रादुर्भवति। पुन सृष्टि ध्यायतस्तस्मात् स्थावररूप. "वृक्षगुल्मलतावीरुत्समस्तास्तृणजातय" इति पञ्चधावस्थित. सर्ग. समुत्पद्यते। पुनरपि सर्गान्तरं ध्यायतो ब्रह्मण किञ्चिदुत्कृष्टास्तिर्यक्-

र्गोजायते। तिर्यञ्च पशुपक्ष्यादय उच्यन्ते । तिर्यक्सर्गमप्यसाधकं
वा सृष्टिं ध्यायतो विधेर्देवसर्गो भवति। स्थावराणामत्यन्तमोह-
त्वात्तिरश्चामतिनामसत्वाद्देवाना-मतिसत्त्वगुणवत्वात्प्रकृत सृष्टौ
नविशेषोपयुक्तान्मन्यमानो विधिरत्यन्तोपयुक्तमपरसर्गमभिध्यायन्न-
क्तात् (शरीरोपादानपृष्ठ्याद्याप्यायनद्वारा) मानुषसर्गं विधत्ते।
व्यक्तोत्सृष्टिरिति सर्वत्र समानम्।

अत पर सात्त्विकतामसोभयस्वभावपरोऽनुग्रहापरनामको देव
र्गो भवति। तत पर नीललोहितरुद्रसनत्कुमारादीना सर्गो भवतीति
कलनया नवसर्गा उच्यन्ते।

वैकृतसर्गो हि त्रिधाभवति। मनस शरीरान्मैथुनतश्च। पूर्वोक्त
एतुतिर्यक्स्थावरसर्गा ब्राह्मणो मानसा विज्ञेया। शारीरिकास्त्वेव
वन्ति। यदा सृज्यशक्ति प्रचोदितो ब्रह्मा अम्भ सञ्ज्ञान्देवासुरपितृ-
नुष्यान् विसृजति तदा हि स स्वमात्मान शरीरान्तरेण योजयति।
ं हि सतमोगुणांशबहुल शरीर विभर्ति, तच्छरीरजघनाच्चासुरान्
जति। ततस्तेन त्यक्ता स तमोमात्रात्मिका तनुस्तमिस्रा जायते।
न सात्त्विक देह धृत्वा म मुखतो देवान सृजति। त्यक्त म
ात्त्विक कायो दिन भवति। भूयो त्रि ध सत्त्वमात्रात्मिकामेवा-
ा तनु गृहीत्वा पार्श्वाभ्या पितृनुद्भावयति। सापित्यक्ता तनु
ाय सन्ध्या भवति। तनु स रजोमात्रात्मिकामन्या तनु धृत्वा
जनान्मनुष्यान् सृजति। परित्यक्त तच्छरीर प्रभान सम्पद्यते,
नरपि स रजोमात्रात्मिकामेवान्यां तनुं धृत्वा रक्षोयक्षपन्नगगन्ध-
ान् स्वाङ्गेभ्य सृजति। एवमेव स वयसो वयासि वक्षसोऽवीन्
खादजा उदरोत्पार्श्वाभ्याञ्च गा पद्भ्यामश्वमातङ्गादान् रोमभ्यश्च
ह्याद्यौषध्या निष्पाद्यसूलूरयादिफलमूलिन्यश्चोत्पादयति। तथैव
पूर्वान्मुखाद् गायत्रमृचस्त्रिवृत्सोम रथन्तरमग्निष्टोममुत्पादयति,
क्षिणादाननाद यजूंपि त्रिष्टुप् छन्द पञ्चदश स्तोम बृहत्सोमोक्थ्यञ्च,
श्चमादाननेनात्सामानि जगती छन्द सप्तदश स्तोमवैरूपमति-
त्रञ्च वमुत्तरान्मुखादेकविंशमथर्वाणमाप्तोर्यामाणमनुष्टुप्छन्दो वैरा-
सामचोत्पादयति।

मानसशरीरसृष्टो ब्रह्मण. सकाशान्मिथुनानामेव प्रजानामुत्पत्ति-
र्वति तथा च तदा योषितां मासि मास्यार्त्तवं न जायते। अतस्ता
जा सेवितैरपि मैथुनै. सन्ततो. प्रसोतु नालम्भवन्ति किन्तु आयुषो-

ऽन्ते सकृन्मिथुनान्येव प्रसूयन्ते । एवं मनोऽभिलषितासृष्टिवृद्धिर्यदा न भवति तदा विधिर्यौनसृष्टये आत्मनः सदृशान् भृगुपुलस्त्यपुलहक्रत्वङ्गिरोमरीचिदक्षात्रिवशिष्ठान् मानसपुत्रान् सृजति ।

यदापूर्वसृष्टा सनन्दादय. केवलं तपसि रताः प्रेरिता अपि लोकेषु न सज्जन्ते तदा ब्रह्मणो महान्क्रोधो भवति भवति च तल्ललाटात्क्रोधप्रचुरम्यार्धनारीनरवपुषो रुद्रस्य समुद्भव. । आत्मविभागार्थं ब्रह्मणादिष्ट स प्रथमं स्त्रीपुरुषरूपेणात्मानं द्विधा विभजति भूयश्च पुरुषरूपमेकादशधा । तदेवं विभागात्क्रोधांशे निर्गते सति सात्त्विकस्वाभावोऽवशिष्टांश स्वायम्भुवो मनुर्भवति । तस्य च तद्देहार्धभूतैव नारी शतरूपाभिधानापत्नी भवति। अनयो सन्ततीनामनुपदोक्तभृगुपुलस्त्यादि ब्रह्मपुत्रसम्बद्धानां सन्तानैर्जगदापूरितं भवति ।

अयमेव सृष्टिक्रम प्रतीयते पुराणेभ्य । यत्र कुत्रापि केचिद्विरोधा दृश्यन्ते ते तदाभासाविज्ञेया', व्याख्यानेन तत्परिहारसम्भवात्। यत्र विरोधोव्याख्यानापरिहरणीयस्तत्रकल्पभेदप्रसङ्गोऽवसेय ।